# उपाख्यान-प्रदीप

[ अश्वमेध-पुराण से उद्धृत चन्द्रहास तथा कुशलव कथानक ]




डा० कैलाशनाथ भटनागर

एम. ए., पी-एच. डी.,

लखनऊ








प्रकाशक

भारतीय गौरव ग्रंथमाला,

७२, हज़रतगंज, लखनऊ





पहला संस्करण ] सन् १९५१ [ मूल्य २)

# INTRODUCTION

This book is prepared for High School Examinations. An explanation, however, is needed for the preparation of this book. So far we have only such books which contain pieces culled from different sources. The topics are so short that the interest of the readers is not maintained. But the fear of examinations makes them study the book. In this book I have given two interesting stories, abridged a little, from the 'Jaimini Aśvamedha Puráṇa.' One story is of Chandrahása, and the other of Kuça and Lava. The first story shows the power of Fate. The Minister Dhriṣṭabuddhi thrice tried to get (the Prince) Chandrahása killed in order to make the words of some Bráhmaṇas false, *viz.*, that he would one day inherit his rank. But Chandrahása was able to save his life all the three times, and was able to marry the daughter of that very evil-minded Minister. He was appointed ruler of the country by the old King, who himself retired to a forest for penance. He also gave to him in marriage his daughter Champaka-Máliní. In his last attempt on the life of Chandrahása, the Minister's own son Madana was killed. The Minister had asked Chandrahása to go for worship at night to the temple of Durgá situated outside the city. While Chandrahása was going to the temple he was met on the way by Madana, who directed him to the King's palace, and him-

self proceeded to the temple instead. Madana was killed there in the temple by the persons hired for this purpose by the cruel Minister. When Chandrahása returned from the King's palace, the Minister was surprised to see him still alive. Chandrahása told him that Madana had sent him to the King, while he himself had gone to the temple. The Minister hurriedly proceeded to the temple and there he saw the dead body of his son. In great sorrow, the Minister also gave up his life. On the next morning, a worshipper of the goddess saw all this, and reported the whole matter to Chandrahása, the King. The noble King Chandrahása immediately reached the temple. and was about to cut off his own head when the goddess Durgá appeared and asked him to ask for a boon. At his request, the goddess brought the dead father and son to life again. The Minister now gave up his evil designs.

The second story begins with the banishment of Sítá by Ráma. The sage Válmíki took pity on her, and took her to his hermitage. There Sitá gave birth to the twin sons, Kuça and Lava. Both these sons received instruction from Válmíki. When Ráma performed the Horse Sacrifice, and his horse was found roaming about in the forest, Lava caught hold of it, and tied it with a rope to a tree. After this, a fight ensued between the royal army and Lava. In this fight Lava gained the upper hand. Hearing of this defeat, Ráma sent his brothers one by one but all of them were defeat-

ed by these twin brothers. At last Ráma himself came to the scene of fight. He was surprised to see the great resemblance of the twin brothers with his own appearance. Later on, the sage Válmíki, having returned from the abode of the god Varuṇa, informed Ráma that the twins were his own sons. He requested him to accept the sinless Sítá together with her twin sons. Ráma took them to his capital. Sítá became a full partner of Ráma in the celebrations of the Horse Sacrifice.

The language of these two stories is very simple and beautiful. I hope these two stories will form a very suitable and useful reading for the students of High School Classes. Exhaustive notes have been added at the end of the book. This, it is hoped, will enhance the usefulness of the book.

ORIENTAL COLLEGE,
LAHORE,
*January, 1934.*

K. N. BHATNAGAR.

# विषय-सूची

# चन्द्रहास-कथा

## प्रथमोऽध्यायः

नारद उवाच—

केरलाधिपतिः पूर्वमासीद्राजा सुधार्मिकः ।
तस्य पुत्रोऽभवन्मूलनक्षत्रे बहुभाग्यवान् ॥ १ ॥

तस्मात्कतिपयैरेव दिवसैर्वेष्टितं पुरम् ।
वैरिभिस्तस्य नृपतेरन्ते श्लेष्मादिभिर्यथा ॥ २ ॥

युद्धं कृत्वा स नृपतिर्जहौ प्राणान्सुधार्मिकः ।
परलोकगतं श्रुत्वा पतिं पत्न्यन्वगान्मुदा ॥ ३ ॥

पितृभ्यां रहितं बालं धात्री कौन्तलकं पुरम् ।
निन्ये पुरः श्रियस्तस्या भविष्यत्पतिमूर्जितम् ॥ ४ ॥

वर्षाणि त्रीणि च तथा पालितो यत्नतः शिशुः ।
धात्र्या कण्डनपेषादिकर्मभिः कौन्तले पुरे ॥ ५ ॥

ध्यायन्ती स्वनृपं धात्री संतप्यति दिने दिने ।
ततः पञ्चत्वमगमद् विहायार्भकमेककम् ॥ ६ ॥

सोऽर्भकस्त्र्याब्दिको गौरो लक्षणैरभिलक्षितः ।
वामपादे लघुं षष्ठीमङ्गुलिं बिभ्रदेव हि ॥ ७ ॥

तदा स्नेहेन बहुना काभिश्चित् प्रतिपालितः ।
स्त्रीभिः पञ्चाब्दिको जातस्ततः स्वैरं चचार सः ॥ ८ ॥

वीथ्यां तथाऽर्भकैः सार्धं रेमे भुङ्क्ते च तैः सह ।
भोजयन्ति च तं काश्चित् स्नापयन्ति पुरस्त्रियः ॥ ९ ॥

लेपयन्ति सुगन्धैश्च चन्दनैर्वरयोषितः ।
स्वपित्यपि च ताभिश्च बालस्तस्मिन् पुरेऽर्जुन ।
कञ्चुकादि प्रयच्छन्ति वरोष्णीषञ्च काश्चन ॥ १० ॥

उपानहौ पट्टसूत्ररज्जु बिभ्रच्छुचिः शुचिः ।
धृष्टबुद्धेः प्रधानस्य मन्दिरं स्वेच्छयाऽगमत् ॥ ११ ॥

विप्रैर्योगीश्वरैः शान्तैर्मुनिभिः समलंकृतम् ।
तं शिशुं मुनयः सर्वे दृष्ट्वा विस्मयमागताः ॥ १२ ॥
पश्चाच्च बुभुजुस्तेन शिशुना पाण्डुनन्दन ! ॥ १३ ॥

धृष्टबुद्धिर्विनीतः संस्तान्मुनीन् पर्यपूजयत् ।
अर्घ्यादिक्रियया सम्यग्भोजयामास पायसम् ।
विविधान्नमपूपांश्च मोदकान्वटकानपि ॥ १४ ॥

तृप्तास्ते मुनयः सर्वे स्वाचान्ताधौतपाणयः ।
धृष्टबुद्धिप्रदत्तेन चन्दनेन सुगन्धिना ॥ १५ ॥

वस्त्रालङ्करणैरन्यैस्तोषितास्तेऽब्रुवन् वचः ।
धृष्टबुद्धेऽभिनन्दामश्चिरञ्जीव सुखी भव ॥ १६ ॥

यस्त्वया वीक्षितो बालः पुरस्तात् पञ्चवार्षिकः ।
कोऽयं कस्य सुतः प्राप्तः कस्माद्देशाच्च तद्वद ॥ १७ ॥

इति पृष्टो धृष्टबुद्धिः प्रत्युवाच स्मयन्निव ।
कति बाला न सन्त्यस्मिन्ननाथाः पुटभेदने ।
राजकार्यगरीयस्त्वान्नाहं जानामि बालकम् ॥ १८ ॥

मुनय ऊचुः—

मनोहरो लक्षणलक्षिताङ्गो बालो ध्रुवं राज्यधरो विभाति ।
त्वं धृष्टबुद्धे प्रतिपालयैनं त्वत्सम्पदां पालयिताऽर्भकोऽग्रे ॥१९॥

ततो विसृष्टा मुनयः सरोषं बुद्ध्याऽमुना चिन्तयता किमीदृक् ।
यथाऽऽगतं ते मुनयोऽभिजग्मुः स राजमन्त्री भृशमन्वतप्यत् २०

किमेभिरीडचैरुदितं वचो मां यत्संपदां तेऽधिपतिर्भविष्यन् ।
पाल्योऽर्भकोऽसौ, विपरीतकर्ता तेषां मुनीनामहमस्मि वाक्यम् २१

विचार्य मन्त्री नृपतेः शिशोर्वधं समाह्वयत् सोऽन्त्यजवृन्दमातुरः ।
रे रे पशुघ्ना वनगह्वरं महद्विनीय बालं प्रतिहन्तुमर्हथ ॥२२॥

चिह्नं शरीरस्य किमप्यवश्यमानाय्यमस्मत्परितुष्टिकारि ।
ततो भवद्भ्यो विविधा महिष्यो मया प्रदेया घटदुग्धभाजः ॥२३॥

नारद उवाच—

तस्य वाक्यं समाकर्ण्य चाण्डाला हर्षिताः शिशुम् ।
प्रतार्य जगृहुर्मत्ता निन्युस्तं वनगह्वरम् ।
भयानकैः पक्षिसङ्घैः सेवितं कण्टकैर्युतम् ॥ २४ ॥

सुधार्मिकस्य तनयं हसन्तमवधार्य तम् ।
शस्त्राणि शितधाराणि कोशेभ्यो जगृहुस्तदा ॥ २५ ॥

तदा स पार्थ ! देवेशं दध्यौ नारायणं स्वयम् ।
कृष्ण ! कृष्ण ! जगन्नाथ ! वासुदेव ! जनार्दन ! ॥२६॥

चाण्डालाः शितधारैश्च खड्गैर्घ्नन्ति जगत्पते ! ।
पाहि मां परमानन्द ! सर्वव्यापिन्नमोऽस्तु ते ॥ २७ ॥

ध्रुवश्च रक्षितो येन प्रह्लादो गजराट् तथा ।
निर्नाथनीचदीनानां त्वं नाथः परिगीयसे ॥ २८ ॥

न माता न पिता बन्धुरस्माकं न च गोत्रजाः ।
न त्राता यदि गोविन्दः को मे त्राता भविष्यति ॥ २९ ॥

पाहि व्यसनतो माऽद्य सर्वव्यापिन्नमोऽस्तु ते ।
ततो देवः स भगवांश्चाण्डालांस्तानमूमुहत् ॥ ३० ॥

मोहितास्त्वन्त्यजा वाक्यमब्रुवन्कीदृशः शिशुः ।
सुकुमारो विशालाक्षो दीर्घबाहुर्मनोहरः ॥ ३१ ॥

किं धृष्टबुद्धिना प्रोक्तं हन्तव्यो बालको वने ।
यच्चान्त्यजा वयं पूर्वं नानापापेन कर्मणा ॥ ३२ ॥

बालकस्य वधाद् घोराद् भविष्यामोऽत्र कीदृशाः ।
अथवा केन दोषेण पितृभ्यां रहितोऽभवत् ॥ ३३ ॥

इत्युदीर्य शिशोर्देहं निरीक्षंस्तेऽन्त्यजास्तदा ।
वामपादे कृशां षष्ठीमङ्गुलिं ददृशुस्तदा ॥ ३४ ॥

छित्त्वा नयामश्चिह्नार्थं धृष्टबुद्धेर्दुरात्मनः ।
इत्युक्त्वा चिच्छिदुः षष्ठीमङ्गुलिं तं विमुच्य च ॥३५॥
त्वरितास्ते पुरं जग्मुश्चिह्नमादाय हर्षिताः ।
धृष्टबुद्धिं नमस्कृत्य दर्शयामासुरङ्गुलिम् ॥ ३६ ॥
जहर्ष हृदि दुर्बुद्धिर्मयाऽकारि वचो वृथा ।
मुनीनामथ चाण्डालान् महिषीभिरतोषयत् ॥ ३७ ॥

इति चन्द्रहासोपाख्याने
चन्द्रहासप्रथमभोक्तो
नाम
प्रथमोऽध्यायः

---

## द्वितीयोऽध्यायः

नारद उवाच—

शृणु पार्थ ! महाबाहो ! स बालो गहने वने ।
स्मरणात्तव मित्रस्य चाण्डालैर्न हतस्तदा ॥ १ ॥

छिन्नषष्ठाङ्गुलिर्बालः क्षरद्रुधिरलेपवान् ।
भृशं रुरोद दुःखार्त्तो मोहयन् हरिणीगणम् ॥ २ ॥

पाहि मां देव ! देवेश ! कृष्ण ! नाथ ! कृपानिधे !
कृच्छ्रान्मोचय मां कान्त ! सर्वव्यापिन्नमोऽस्तु ते ॥ ३ ॥

तं हरिण्यः समागम्य लिलिहुश्चरणं शनैः ।
पक्षिणो दुःखिताः सर्वे छायां पक्षैः स्म कुर्वते ॥ ४ ॥

एतस्मिन्नन्तरे प्राप्तो देशाध्यक्षः कुलिन्दकः ।
तद्देशरक्षणार्थाय आगतो वनगह्वरे ॥ ५ ॥

अथो ददर्श तं बालं स्रवदश्रुलवाननम् ।
जपन्तं हरिनामानि राम कृष्ण रमापते ॥ ६ ॥

त्राहि मां करुणासिन्धो ! द्रौपदी च यथा पुरा ।
किमुपेक्षसि मां बालं वने मात्रा विवर्जितम् ॥ ७ ॥

यद्युपेक्षसि मां नाथ ! तवैव हि तदा त्रपा ।
त्वद्भक्ता नावसीदन्ति श्रुतमेतन्मया विभो ! ॥ ८ ॥

श्रुत्वा वाक्यं स नृपतिः कुलिन्दो विस्मयान्वितः ।
अवतीर्य हयात्क्षिप्रं बालं च परिसान्त्वयन् ॥ ९ ॥

उवाच वाक्यं मेधावी सोऽश्रूणि परिमार्जयन् ।
कः पिता तव का माता क्व च ते सुहृदां गणः ।
किमर्थं निर्जनेऽरण्ये स्थितः प्रब्रूहि मां शिशो ॥ १० ॥

बालक उवाच—

मम माता पिता कृष्णस्तेनाहं परिपालितः ।
तमपश्यन् महाराज ! रोदनं क्रियते मया ॥ ११ ॥

श्रुत्वैतच्चिन्तयामास स राजा वै कुलिन्दकः ।
ममापुत्रस्य जायेत पुत्रोऽसौ वैष्णवः शिशुः ॥ १२ ॥

इत्युक्त्वा तं समालिङ्ग्य वाजिपृष्ठे त्वरोपयत् ।
स्वयं चारुह्य नगरीं चन्दनाह्वां कुलिन्दकः ॥ १३ ॥

ययौ परिजनैः सार्धं हर्षोदर्कात् स्फुरद्भुजः ।
गच्छन्पथ्यब्रवीत् सा मे पापर्द्धिः पुण्यदाभवत् ॥ १४ ॥

इत्थं ब्रुवन् स नगरीं सम्प्राप्तश्चन्दनावतीम् ।
प्रविवेश कुलिन्दः स्वभवनं पुत्रसंयुतः ॥ १५ ॥

मेधाविन्यै स्वराज्ञ्यै तं पुत्रं लब्धं न्यवेदयत् ।
सा हर्षिताऽब्रवीद्वाक्यमशोच्याऽस्म्यधुना त्वहम् ।
जाता मनोरथाः सर्वे पाविताऽहं न संशयः ॥ १६ ॥

नारद उवाच—

ततः कुलिन्दो मेधावी उत्सवं समचीकरत् ।
ब्राह्मणान् स्नातकान् वेदविदुषः पर्यपूजयत् ॥ १७ ॥

गणका अब्रुवन् हृष्टा हे कुलिन्द ! तवार्भकः ।
अयं बहुश्रवाः श्रीमान्विष्णुभक्तो महायशाः ॥ १८ ॥

चन्द्रः शुद्धमुखाद्रम्याद्धसतोऽस्य पतिष्यति ।
चन्द्रहासेति नाम्नाऽयं भविष्यति धरापतिः ॥ १९ ॥

ततः प्रभृति भोः पार्थ ! चन्द्रहासो दिने दिने ।
कुलिन्दस्याशया सार्धं व्यवर्धत यथा शशी ॥ २० ॥

सप्ताब्दिकश्चन्द्रहासो नानाक्षरविनिर्णयम् ।
विचार्य सम्यङ् मनसा हरिरित्यक्षरद्वयम् ।
स जजाप सदा, क्रुद्धस्तदा सोऽक्षरपाठकः ॥ २१ ॥

अहर्निशं चन्द्रहास ! हरिरित्यक्षरद्वयम् ।
उदाहरसि नान्यांस्त्वं वर्णान् पठसि चार्भक !॥ २२ ॥

चन्द्रहास उवाच—

सिद्धो वर्णसमाम्नायः समग्रो ह्युच्यते मया ।
हरिरित्यक्षरालापान्नान्यन्निःसरते मुखात् ।
मदीयात् किंकरोम्यद्य किंकरो भवतामहम् ॥ २३ ॥

ततो गुरुश्चुकोपास्मै वंशं भिन्नं करे दधत् ।
ककेति भण भोः शिष्य ! जिह्वैवं परिवर्त्तते ॥ २४ ॥

चन्द्रहासोऽब्रवीद्वाक्यं भीतवत्तं शनैः शनैः ।
न भणामि कदाचिन्मे न जिह्वा परिवर्त्तते ॥ २५ ॥

हरिनाम जपिष्यामि नान्यैः शास्त्रैः प्रयोजनम् ।
यत्र नाम हरेर्नास्ति तानि शास्त्राणि किं प्रभो ! ॥२६॥

नारद उवाच—

चन्द्रहासगुरुर्गत्वा कुलिन्दं वाक्यमब्रवीत् ।
महाभूतस्य संचारात् कस्यचित्तव पुत्रकः ।
अहर्निशं हरिरिति प्रजल्पन् परितिष्ठति ॥ २७ ॥

पाठितोऽपि मया शास्त्रं कुबुद्धिर्न पठत्यसौ ।
यद्याज्ञा मम राजेन्द्र ! तर्हि शास्मि न संशयः ॥२८॥

कुलिन्द उवाच—

दैवाल्लब्धो मया पुत्रः स कथं ताड्यतेऽधुना ।
ईदृशोऽपि पिशाचोऽयं मूर्खः पालयिता ध्रुवम् ॥ २९ ॥

तस्माद्याहि गृहं विप्र ! चन्द्रहासो यथासुखम् ।
वर्त्ततामष्टमेऽब्देऽस्य मेखलाबन्धनक्रियाम् ।
करिष्यामि ततश्चायं वेदाभ्यासं करिष्यति ॥ ३० ॥

यथाऽऽगतं गतो विप्रो हर्षितोऽभूत् कुलिन्दकः ।
गाढमालिङ्ग्य तं पुत्रं चन्द्रहासं मनोरमम् ॥ ३१ ॥

अनेनैकेन पुत्रेण पाविता विषया मम ।
विष्णुभक्तेन दक्षेण किमन्यैर्बहुभिः सुतैः ॥ ३२ ॥

सर्पिण्या बहवः पुत्रा जायन्ते भेकभक्षकाः ।
अयं हरिपदध्यानगतचित्तः सुतो मम ॥ ३३ ॥

किं मया चरितं पूर्वं तपः पञ्चाग्निसाधनम् ।
येनाहं प्राप्तवान् पुत्रं निपुणं जनवल्लभम् ॥ ३४ ॥

नारद उवाच—

अथाष्टमेऽब्दे संप्राप्ते मेखलाबन्धनक्रियाम् ।
चन्द्रहासस्य सकलां व्यदधात् स कुलिन्दकः ॥ ३५ ॥

ततो वेदाहुतीर्हुत्वा साङ्गं वेदमपाठयत् ।
पठित्वा निखिलं वेदं धनुर्वेदमथभ्यसत् ॥ ३६ ॥

इति चन्द्रहासोपाख्याने
चन्द्रहासविद्याध्ययनं
नाम
द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

अर्जुन उवाच—

कथयस्व कथामेतां सुधां रूपां मनोरमाम् ।
तारुण्यं विषयं प्राप्य किमाचरितवान् मुने !
चन्द्रहासो नृपवरस्तन्ममाचक्ष्व तत्त्वतः ॥ १ ॥

नारद उवाच—

अथोनषोडशाब्दोऽसौ जनकं वाक्यमब्रवीत् ।
विभो ! ददासि चेन्मह्यमाज्ञां दिग्विजयाय तान् ॥ २ ॥

याम्यहं सकलान्भूपाञ्जित्वा तव बलादरीन् ।
धनं समानयिष्यामि नरराजैः समं नृप ! ॥ ३ ॥

कुलिन्दः प्रत्युवाचेदं कथमेकः प्रयास्यसि ।
राजानः सन्ति दुर्जेयाः सैन्येन महता वृताः ॥ ४ ॥

अथवा वासुदेवं तं संस्मृत्य गच्छसे हठात् ।
अस्मत् स्वामी धृष्टबुद्धिर्मन्त्री कौन्तलपस्य सः ॥ ५ ॥

शतग्रामक एवायं देशस्तेनार्पितो मम ।
इतस्ततस्यैव नृपतेर्वैरिणो बलवत्तराः ॥ ६ ॥

पीडयन्ति स्म मद्देशं ; त्वामाकर्ण्योपरेमिरे ।
इत्थं पितुर्वचः श्रुत्वा चन्द्रहासो ययौ मुदा ॥ ७ ॥

रथिभिः पञ्चभिः सार्धं देशांस्तान् वीरपूरितान् ।
तान् सर्वानजयद्धन्वी चन्द्रहासो नृपान् हसन् ॥ ८ ॥

विजित्य नृपतीन्सर्वान् गजानश्वान् सहस्रशः ।
सुवर्णरत्नमुक्ताभिः पूरिताञ्छकटान् बहून् ॥ ९ ॥

चन्द्रहासः समादाय स्वां पुरीं चन्दनावतीम् ।
आविवेश कुलिन्देन संमुखेनाभिनन्दितः ॥ १० ॥

अथाभ्यषिंचत्तं पुत्रं चन्द्रहासं स्वके पदे ।
वेदविद्भिर्द्विजैः सार्धं कुलिन्दः पंचमीदिने ॥ ११ ॥

महोत्सवं तदा चक्रुः पौराः सर्वे यथाक्रमम् ।
एकीभूय ततः पौराश्चन्द्रहासमपूजयन् ॥ १२ ॥

सुवर्णरत्नवासोभिः पौरानन्यांश्च दुर्गतान् ।
चन्द्रहासो द्विजान्सर्वान् समलङ्कृतवान् मुदा ॥ १३ ॥

मंदिराणि विचित्राणि स द्विजार्थमकारयत् ।
वापीकूपतडागादि पूर्तं विष्णवालयानि च ॥ १४ ॥

नारद उवाच—

तां चन्दनाह्वां परिपालयन्तं तं चन्द्रहासं जनकः कुलिन्दः ।
उवाच हे पुत्र ! मया प्रदेयं निष्कायुतं कुन्तलपाय राज्ञे ॥१५॥

तदर्धमस्मत्प्रभवे प्रदेयं पुनस्तदर्धं मम स्वामिपत्न्यै ।
तत्प्रेषयाशु त्वमुदारसत्त्व ! प्रीतिं यथा मन्त्रिनृपौ लभेताम् ॥१६॥

इतः षड्योजनं वत्स ! विद्यते कौन्तलं पुरम् ।
यस्मिन् कौन्तलपो राजा गालवेन पुरोधसा ॥ १७ ॥
राज्यं च कुरुते सम्यङ् मन्त्रिणा धृष्टबुद्धिना ।
चन्द्रहासः समाकर्ण्य पितुर्वाक्यं प्रहर्षितः ॥ १८ ॥
यन्मन्त्रिणे च राज्ञे च पत्न्यै यत्प्रेर्यते वसु ।
तत्सर्वं गालवायाशु दीयते तात ! सत्वरम् ॥ १९ ॥
इत्युक्त्वा वस्तुजातं तत्प्रेषयामास लीलया ।
वामीभिरुष्ट्रैः शकटैर्दुकूलानि च काञ्चनम् ॥ २० ॥
शुद्धं मलयजं चारुकर्पूरं मृगसम्भवम् ।
गजाः संप्रेषितास्तेन वाजिनश्च मनोरमाः ॥२१॥
तस्मै कुन्तलपायाऽसौ मन्त्रिणे धृष्टबुद्धये ।
चारुविज्ञप्तिसहितं पत्रं प्रेषितवान् पुनः ॥२२॥
पत्रं च तद्धनं सर्वं समादाय प्रतस्थिरे ।
सेवकाश्चन्द्रहासस्य प्रापुः कौन्तलकं पुरम् ॥२३॥
स्नात्वा संपूज्य च हरिं ते जग्मुः मन्त्रिणो गृहम् ।
दृष्ट्वा कृताभिषेकान् तानार्द्रवासोधरांस्तथा ॥२४॥
कुलिन्दोपरतिं मिथ्या धृष्टबुद्धिरतर्कयत् ।
अथाब्रवीदतिप्रह्वान् स कुलिन्दस्य सेवकान् ॥२५॥
कदा पञ्चत्वमापन्नः कुलिन्दो देशरक्षकः ।
दिनानि कति जातानि तच्चानिष्टमभून्महत् ॥ २६ ॥

सेवका ऊचुः—

अनिष्टं वैरिणां भूयान्मा कुलिन्दस्य जातुचित् ।
कुलिन्दस्य सुपुत्रेण चन्द्रहासेन धीमता ।
कृत्वा दिग्विजयं युष्मत्प्रदेयं प्रेषितं वसु ॥ २७ ॥

अमी हिरण्यकलशैः कर्पूरागुरुचन्दनैः ।
दुकूलैः शकटाः पूर्णा आयान्ति तव मन्दिरे ॥ २८ ॥

एषां सप्तगुणाः प्राप्ताः कुन्तलाधिपतेर्गृहम् ।
विस्मितो धृष्टबुद्धिस्तद्धनं जग्राह हर्षितः ॥ २९ ॥

द्वितीयस्मिन् दिने हृष्ट आमन्त्र्यनृपतिं ययौ ।
आलोकितुं धृष्टबुद्धिः पुरीं तां चन्दनावतीम् ॥ ३० ॥

द्वाभ्यां दिनाभ्यां नगरीं प्राप तां चन्दनावतीम् ।
महारण्यमिदं चासीदवगाहोऽस्मिन् महापुरी ।
इति विस्मयमापन्नं मन्त्रिणं सम्मुखागतः ॥३१॥

कुलिन्दः सह पुत्रेण नमस्कृत्याऽनयद् गृहम् ।
पूजयामास विधिवत् सपुत्रः प्रणतः स्थितः ॥३२॥

तं मन्त्री परिपप्रच्छ पुत्रस्तेऽयं कदाभवत् ।
नाख्यातवान् पुत्रजन्म भवान्नः पुरतः कथम् ॥३३॥

कुलिन्द उवाच—

औरसो न हि पुत्रो मे स्वयं प्राप्तो मनोरमः ॥३४॥
एकदा मृगयाविष्टचित्तोऽहं वनगह्वरम् ।

प्रविष्टः कौन्तलपुराद्योजनद्वयसंमितम् ।
तत्राद्राक्षमहं बालं छिन्नषष्ठांङ्गुलिं सुतम् ॥३५॥
पञ्चाब्दमधिकं पुत्रादौरसाद्धरिसेवकम् ।
चन्द्रहासं विष्णुभक्तं जानीहि त्वं महामते ! ॥३६॥

नारद उवाच—
अन्तर्दृष्टिरभूत् पार्थ ! योगिवद्धृष्टधीः क्षणम् ।
अन्तर्विवृणुते स्मायं किंचित् सत्यं मुनेर्वचः ॥३७॥
स एवायं मया बालो ज्ञायते षोडशाब्दिकः ।
चाण्डालैर्वञ्चितश्चाहमङ्गुलीदर्शकैर्ध्रुवम् ॥ ३८ ॥
द्वौ पुत्रौ मम विद्येते युवानौ मदनामलौ ।
तौ किं करिष्यतश्चेत्स्यादयं मे सम्पदां प्रभुः ॥ ३९ ॥
अतिक्रान्तं हि यत्कार्यं पश्चाच्चिन्तयते बुधः !
तच्चास्य न भवेत्कार्यं चिन्तयानो विनश्यति ॥ ४० ॥
यद्गतं गतमेवास्तु करिष्याम्यनृतं वचः ।
मुनीनामथ निश्चित्य मनसाथाब्रवीद् गिरम् ॥ ४१ ॥
धारयन् हर्षचिह्नानि वाह्यान्तर्मलिनस्तथा ।
यथा पाखण्डजा चेष्टा मनुष्यस्य महीपते ! ॥ ४२ ॥

धृष्टबुद्धिरुवाच—
सफलं तव जन्माद्य येन प्राप्तः सुतः शुभः ।
ममापि हृदये हर्षः संजातस्तु महानहो ॥ ४३ ॥

इत्थं वचः प्राह निगूढभावं
क्षुरं प्रलिप्तं मधुनेव तीक्ष्णम् ।
यथा तृणैश्छादितगर्तमेव
यथान्नमाविष्टविषं विचित्रम् ॥ ४४ ॥

इति चन्द्रहासोपाख्याने
धृष्टबुद्धेश्चन्दनावतीं
प्रतिगमनं नाम
तृतीयोऽध्यायः

---

## चतुर्थोऽध्यायः

नारद उवाच—

पुनर्दध्यौ धृष्टबुद्धिः कुबुद्धीनां महार्णवः ।
कथं मुनिवचोऽसत्यं कथं पञ्चत्वमेत्ययम् ॥ १ ॥

प्रत्यक्षं हन्मि चेदत्र कुलिन्दतनयं रिपुम् ।
तदा मां विविधैः शस्त्रैर्हिंस्युरेते न संशयः ॥ २ ॥

ततो भवेतां नूनं मे दुःखितौ मदनामलौ ।
स्वयमेव वधं कुर्यामुत राजभटैरहम् ॥ ३ ॥

नामुना तु प्रकारेण हन्तुं शक्यो मया रिपुः ।
शम्भुना यद्धृतं कंठे तद्दानाद्धन्मि तं रिपुम् ।
चन्द्रहासमिति ध्यात्वा हर्षितः सोऽब्रवीद्वचः ॥ ४ ॥

धृष्टबुद्धिरुवाच—

चन्द्रहास ! विचित्रं त्वं पत्रमानय लेखनीम् ।
मषीं यथा लिखित्वैकं पत्रं त्वां प्रेषये पुरम् ॥ ५ ॥

नारद उवाच—

तेनार्पितमुपादाय पत्रमेकान्तसंस्थितः ।
धृष्टधीरर्पयामास तस्मिन्वर्णान् यथाक्रमम् ॥ ६ ॥
स्वस्ति श्रीरस्तु मदन ! वक्तुं कारणमीदृशम् ॥ ७ ॥

चन्द्रहासोऽहितोऽतीव ममायं संपदां पदम् ।
ज्ञातव्यो नात्र संदेहः पुत्र ! कार्यं त्वयेदृशम् ॥ ८ ॥

मा रूपं मा वयो द्राक्षीः कुलं शीलं पराक्रमम् ।
विद्यां वित्तं विलम्बं माऽमित्रस्यास्य कुरु ध्रुवम् ॥९॥

विषमस्मै प्रदातव्यं त्वया मदन शत्रवे ।
पार्वतीशं शिवं ध्यात्वा कृतार्थाः स्याम यद्वयम् ॥१०॥
चन्द्रहासं विशालाक्षमूचिवान् मद्वचः शृणु ॥११॥

धृष्टबुद्धिरुवाच—

महत्कौन्तलके कार्यं विद्यते मदनं प्रति ॥ १२ ॥

त्वं याहि पत्रं हि मया मुद्रितं मा विमोचय ।
भूयाद् गूढं तव हितं पत्रे दत्ते सुताय मे ॥ १३ ॥
शीघ्रं वाजिनमारुह्य चतुर्भिः सेवकैर्वृतः ।
याहि कौन्तलकं पुत्र धर्म्यं द्रष्टासि पुत्रकम् ॥१४॥

नारद उवाच—

स तत्पत्रमुपादाय वेगमास्थाय शोभनम् ।
मन्त्रिणं तं नमस्कृत्य कुलिन्दं पितरं ततः ॥ १५ ॥

मेधावतीमगात्स्रष्टुं नमस्कर्तुं कुलिन्दवत् ।
तया नीराजितश्चाथ आशीभिरभिनन्दितः ॥ १६ ॥

दधिदूर्वाक्षतोन्मिश्रं तिलकं कुर्वती प्रसूः ।
अब्रवीत्सा तु पन्थानः शिवास्ते सन्तु सर्वदा ॥ १७ ॥

चन्द्रहासोऽथ जननीं नमस्कृत्य परीत्य च ।
प्रायादश्वाधिरूढस्तैः प्रेष्यैः प्रियहिते रतैः ॥ १८ ॥

प्राप्य कौन्तलकाभ्याशे रम्यं क्रीडावने सरः ।
वरटाभिः समं हंसा यत्र गार्हस्थ्यमास्थिताः ।
कमलोदयेन महता धवला ब्रह्मपत्रजाः ॥ १९ ॥

तस्यामलाम्भः सरसः समीपे वनं ददर्शाम्रतमालनीलम् ।
स चन्द्रहासोऽद्भुतमेव मेने साक्षाद्वसन्तं च वसन्तमत्र २०

फुल्लं पलाशं नवकुंकुमाभं तमेव वक्त्रं किल बिभ्रतं तम् ।
वनश्रिया संगमकज्जलांकं तत्पत्रवल्लीधरमद्भुताभम् २१

तत्र पल्लविता आसन् द्रुमास्तस्मिन्मधौ सति ।
मञ्जर्यः पल्लवा रम्या भान्ति चूततरौ तदा ॥ २२ ॥

तस्मिन्पल्लविते़ऽत्यन्तं कोकिलामधुरस्वरम् ।
चुकूज कामिनां चित्तमाकर्षन्तीव दूतिका ॥ २३ ॥

पुन्नागबकुलाशोकचम्पकाः पुष्पिता बभुः ।
मालतीयूथिकाजात्यः पुष्पस्तनभरानताः ॥ २४ ॥

केतक्यः पुष्पगंधाढ्या लीनभ्रमरलोचनाः ।
पुष्पवर्षैरर्चयन्त्यः स्वभर्त्तारं च माधवम् ॥ २५ ॥

नारद उवाच—

मधोरुत्सवमालोक्य कुलिन्दतनयो मुदम् ।
परां प्राप हरेरेव चरित्रं हृदये दधत् ॥ २६ ॥

स्नात्वा संपूज्य च हरिं तैः पुष्पैर्मधुसंभवैः ।
संकल्पयित्वा हरये पाथेयं बुभुजे शनैः ॥ २७ ॥
सेवकैः क्षिप्तदूर्वादिं पुरस्ताद्वाजिनं तरौ ।
रसाले सन्नियम्याथ अशेत प्रहरद्वयम् ॥ २८ ॥
अथ कौन्तलपस्यैका कन्या चम्पकमालिनी ।
धृष्टबुद्धेश्च विषया रतिं हसति या श्रिया ॥ २९ ॥
कन्यके जग्मतुः कन्याशतेन परिवारिते ।
वसन्तागमपुष्पाढ्यं पुरोपवनमुत्तमम् ॥ ३० ॥
पुष्पावचयमिच्छन्त्यः कर्तुं सर्वाश्च कन्यकाः ।
सार्द्धत्रयोदशाब्दास्ता यौवनोद्भेदचंचलाः ॥ ३१ ॥
रम्यमौक्तिकहारैश्च मण्डिताभ्यां शनैर्ययुः ।
नृत्यन्त्यो नूपुररवैस्तालिकाशब्दकैः पथि ॥ ३२ ॥
गायन्त्यःस्म हसन्त्यःस्म क्षरत्ताम्बूलचन्द्रिकाः ।
प्रापुः क्रीडावनं रम्यं कोकिलालापनादितम् ॥ ३३ ॥
परस्परं हसन्त्यस्ताः प्रकुर्वन् पुष्पसंचयम् ।
मालतीयूथिकाजातीमोगरादिकवीरुधाम् ॥ ३४ ॥
कन्याः सुमनसां मालाश्चक्रुः कण्ठेषु ता दधुः ।
सपुष्पां दाडिमीं वीक्ष्य प्राह चम्पकमालिनी ॥ ३५ ॥

राजकन्योवाच—

विषये ! सुभगे ! पश्य महदद्भुतमग्रतः ।
आदौ पुष्पोद्गमः पश्चाद्दृश्यते स्म फलोद्गमः ॥ ३६ ॥

विपरीतं त्वयि कथं जातं बिल्वफलस्तनि ।
वनस्पतीनां धर्मोऽयं विषया प्राह भूपजाम् ॥ ३७ ॥

राजकन्योवाच—

चक्षुः स्फुरति ते वामं काको रौत्याम्रपास्थितः ।
शंसतीव प्रियं प्राप्तं कामानां तव पूरकम् ॥ ३८ ॥

इत्थं चम्पकमालिन्या वचः श्रुत्वा जहास सा ।
उवाच वचनं रम्यं लज्जतीव प्रधानजा ॥ ३९ ॥

विषयोवाच—

अलं पुष्पचयेनाद्य संतप्ता रविणा वयम् ।
यामः शीतजलं तस्मात्तत्सरः कमलाकरम् ॥ ४० ॥

तच्छ्रुत्वा वचनं तस्याः कन्यका निर्ययुर्वनात् ।
गच्छन्त्यस्तत्सरः प्रापुः पद्मिनीखण्डमण्डितम् ।
हंसा भीताः पलायन्ते सिञ्जितश्रवणाद्धनात् ॥ ४१ ॥

नारद उवाच—

ताश्चम्पकाङ्ग्यो विविशुस्तत्सरः शिवलीलया ।
अगाधं निर्मलं गाधं कलुषं तत्सरोऽभवत् ॥ ४२ ॥

कन्याभिर्निष्ककण्ठीभिस्तादृशीभिरधिष्ठितम् ।
परस्परं हासमुक्तीश्चक्रुस्ता अभितः सरः ॥ ४३ ॥

क्रीडालोलकरा स्फालत्त्रुटन्मौक्तिकपूरितम् ।
मणिबन्धस्खलद्रम्यप्रवालमणिचित्रितम् ॥ ४४ ॥

अनन्तश्रीधरं तासां मुखचन्द्रैरलङ्कृतम् ।
तत्सरः शुशुभेऽतीव रत्नाकरनिभं स्फुटम् ॥ ४५ ॥

परस्परं ताः सिषिचुर्जलेनातिसुगन्धिना ।
स्तनकुङ्कुमकस्तूरीचन्दनागुरुगन्धिना ॥ ४६ ॥

उच्छलज्जलविन्दूनां मिषेण जलदेवताः ।
क्रीडन्ते मौक्तिकैश्चैताः कन्यकाः शुशुभुर्वने ॥ ४७ ॥

विन्दुवर्षं समालोक्य चातका घनशङ्कया ।
मुखं व्यादाय पश्यन्ति घनपङ्क्तीः पिपासया ॥ ४८ ॥

रम्यैः कनकनालैस्तु बवन्धुः काश्च कांचन ।
जहसुर्वभ्रमुः कन्या डिण्डिमं चुक्रुशुर्जगुः ॥ ४९ ॥

एवं स्म ताः सरसि कुंकुमनीरभाजि
स्नात्वाऽवलाः परिदधुः स्म दुकूलवृन्दम् ।
ताटंकपत्रवरमौक्तिकहारनिष्कैः
पूर्णोडुपाभतिलकैर्व्यधुरंगभूषाम् ॥ ५० ॥

तां विहाय जलकेलिमुत्तमां धृष्टवुद्धितनया तटस्थिता ।
अन्ववैक्षत हरिं यथा रमा चन्द्रहासमथ सा सरस्तटे ॥ ५१ ॥

षोडशाब्दवयसं सुकुमारं श्मश्रुलं विमलदीर्घललाटम् ।
पट्टबद्धहयमल्पजनं तं सिंहशावमिव वाढममंस्त ॥ ५२ ॥

इति चन्द्रहासोपाख्याने
विषयौत्सुक्यं
नाम
चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

जैमिनिरुवाच—

जलक्रीडारुणाक्ष्यस्ता निर्ययुः स्वान्गृहान्प्रति ।
विषया न ययौ पार्थ ! चन्द्रहासगुणैर्वृता ॥ १ ॥

गच्छत्सु मानुषेष्वेको निधिं पश्यत्पुरस्थितम् ।
स यथा निश्चलस्तत्र तथा सा विषया स्थिता ॥ २ ॥

किं न याम्यथवा यामि सुन्दरं पुरुषं वने ।
अमुं विवेकं मदनस्तदीयं व्यलुनाच्छरैः ॥ ३ ॥

सैरन्ध्रीं सा समाहूय नूपुरौ प्रददौ निजौ ।
ततः पदं पदे कृत्वा दुकूलेऽपि विशंकिता ॥ ४ ॥

हंसीव सा यथा हंसं ययौ दृष्टस्तुरङ्गमः ।
चरन्दूर्वाङ्कुराञ्छायामाञ्छायामया स नमस्कृतः ॥ ५ ॥

मम प्राणान् प्रिये सक्तान् मा शब्देन वियोजय ।
इति ब्रुवन्ती शनकैः प्राप्ता कुण्डलिनं जनम् ॥ ६ ॥

पतिवत्तं हि विषया दत्तदृष्टिरवैक्षत ।
ततो ददर्श रुचिरं पत्रं कञ्चुकनिःसृतम् ॥ ७ ॥

गृहीत्वा तत्करेणाशु मुद्रामुन्मुच्य विस्मिता ।
वाचयामास तत्पत्रं पितुरत्यन्तहर्षिता ॥ ८ ॥

स्वस्ति श्रीरस्तु मदन वक्तुं कारणमीदृशम् ।
चन्द्रहासोऽहितोऽतीव ममायं संपदां प्रभुः ॥ ९ ॥

ज्ञातव्यो नात्र सन्देहः पुत्र ! कार्यं त्वयेदृशम् ।
मा रूपं मा वयो द्राक्षीः कुलं शीलं पराक्रमम् ॥ १० ॥
विद्यां बलं विलम्बं मामित्रस्यास्य कुरु ध्रुवम् ।
विषमस्मै प्रदातव्यं त्वया मदन ! शत्रवे ॥ ११ ॥
पार्वतीशमिति ध्यात्वा कृतार्थाः स्याम यद्द्वयम् ।
दध्यौ सा विषया पश्चादभिप्रायं विवृण्वती ॥ १२ ॥
संपदां मे प्रभुर्नित्यं हितो मदनसन्निभः ।
एवमादि यथा पत्रे रुचिरं वीक्ष्यते यथा ॥ १३ ॥
वरं मनोरमं वीक्ष्य मद्रूपं हर्षनिर्भरः ।
विषमस्मै प्रदातव्यमत्र चस्खाल मे पिता ॥ १४ ॥
पितुर्वै पत्रमालोक्य मदनोऽपि हनिष्यति ॥ १५ ॥
कनिष्ठिका नखेनाथ तीक्ष्णेनादाय सुन्दरी ।
रसालद्रुमनिर्यासं लिलेख विषया तदा ॥ १६ ॥
विषयाऽस्मै प्रदातव्येत्येवं वर्णान् समालिखत् ॥ १७ ॥
पत्रं रसालनिर्यासकृतमुद्रं विधाय सा ।
कंचुकाभ्यन्तरे न्यस्य विषयाऽगान्निवेशनम् ॥ १८ ॥
पुनः पुनश्च पश्यन्ती पृष्ठतः प्राणवल्लभम् ।
ततो दृष्ट्वा व्रजन्ती सा सखीभिर्विषया तदा ॥ १९ ॥

सख्य ऊचुः—

कस्माद्विलम्बितं भद्रे कस्माद्धर्षो महांस्त्वयि ।
कस्माद्वै वीक्ष्यते पृष्ठे कच्चिद्दृष्टो नृकेसरी ॥ २० ॥

सिंहो दृष्टः कथं त्यक्तः सुप्तो नूनं त्वयेक्षितः ।
मन्ये तदीयं सर्वस्वं मुष्णासि त्वं निगूहसे ॥ २१ ॥

क्रीडन्त्यो हास्य वचनैः सर्वाः स्वं स्वं गृहं ययुः ।
अथापि विषया कन्या प्रास्थिताऽतीव हर्षिता ॥ २२ ॥

सूर्यं दृग्भ्यां प्रपश्यन्ती प्रार्थयन्ती पतिं प्रियम् ।
विषया गृहमागत्य हृष्टा सा प्रियदर्शनात् ॥ २३ ॥

सप्तभूमिकमास्थाय मन्दिरं सा व्यलोकयत् ।
चन्द्रहासोऽपि सायाह्ने प्रबुद्धः सिंहविक्रमः ॥ २४ ॥

प्रक्षालितास्यः कृतवक्त्रशुद्धिः पल्याणयुक्तं हयमारुरोह ।
चतुर्भिरेवानुगतः स्वभृत्यैः पुरं विवेशाप्रतिमप्रभावः ॥ २५ ॥

चन्द्रहासो धृष्टबुद्धिभवनं प्राप सत्वरः ।
अवतीर्य हयात्तस्माद् द्वाःस्थं वचनमब्रवीत् ॥२६॥

अन्तः कथय रे द्वाःस्थ ! मदनं प्रति मे वचः ।
श्रीमद् धृष्टमतेर्वाक्यकारकश्चन्द्रहासकः ॥ २७ ॥

प्राप्तो वचनसन्देशकथापत्रधरो बहिः ।
शिर आनम्य स द्वाःस्थः स्वामिनं मदनं ययौ ॥२८॥

द्वाःस्थं विवेकनामानं मदनस्य प्रियं सदा ।
श्रद्धायष्टिधरं प्राप्तञ्चन्द्रहासं न्यवेदयत् ॥ २९ ॥

चामरैर्वीज्यमानं च मदनं धृष्टबुद्धिजम् ।
विवेकनामा द्वाःस्थस्तं नमस्कृत्यालपद् गिरम् ॥३०॥

विवेक उवाच—

केवलं तव भृत्योऽहं प्रियश्च न पितुस्तव ।
पितुस्तेऽन्यः क्रोधनामा हिंसायष्टिधरः प्रियः ॥ ३१ ॥

स स्वामिभक्तो मदन यावन्नायाति ते सदः ।
तावन्मदीयं वचनं शृणु सभ्यैः समन्वितः ॥ ३२ ॥

यश्चिन्त्यते सदा शान्तैर्योगिभिर्मधुसूदनः ।
तस्य भक्तश्चन्द्रहासः प्राप्तो द्वारं महामते ! ॥ ३३ ॥

उत्तस्थौ च समाकर्ण्य मदनस्तैः सभाजनैः ।
स्खलद्दुकूलाभरणः प्राञ्जलं च समुत्क्षिपत् ॥ ३४ ॥

क्षणाद्ददर्श मदनश्चन्द्रहासं हरेः प्रियम् ।
नमस्कृत्याभिलिङ्ग्याथ सभां रम्यां समानयत् ॥ ३५ ॥

वरासने सन्निवेश्य संपूज्य मदनोऽब्रवीत् ।

मदन उवाच—

कच्चित्कुलिन्दः कुशली कच्चित्कुशलिनी प्रिया ॥ ३६ ॥

कच्चित्ते विषये विप्रा वेदाभ्यासं प्रकुर्वते ।
कच्चित्क्षत्रियविट्शूद्राः पूजयन्ति द्विजान् धनैः ॥ ३७ ॥

कच्चित्प्रजा नो पिशुनैर्बाध्यन्ते दुःखदैः करैः ।
अपि त्वं कुशली प्राप्तश्चिन्तयन्मनसा हरिम् ॥
किमत्रागमने कार्यं तदाचक्ष्व जनप्रियम् ॥ ३८ ॥

चन्द्रहास उवाच—

युष्मादृशां सतां संगाद्विपदो यान्ति संक्षयम् ।
सन्देशात्ते पितुः प्राप्तः पत्रं गृह्णीष्व वाचय ॥ ३९ ॥

एकान्ते गूढमस्त्यत्र महत्कार्यं न वेद्मि तत् ।
करे गृहीत्वा मदनः पत्रं प्रोवाच विस्मितः ॥ ४० ॥

शृण्वतां सर्वलोकानां वाचयामास मन्त्रिजः ।
स्वस्त्यस्तु मदनायाशु विषयाऽस्मै प्रदीयताम् ॥ ४१ ॥

न रूपं न कुलं शौर्यं मा विद्यां चावलोकय ।
इति पत्रे स्थितं वीक्ष्य हृषितो मदनोऽब्रवीत् ॥ ४२ ॥

अद्य मे पावितो वंशः पित्रा सर्वे च बान्धवाः ।
मया यच्चिन्त्यते नित्यं स्वयमेवाभवच्च तत् ॥ ४३ ॥

नारद उवाच—

हर्म्यस्य सप्तमे पृष्ठे विषया काममोहिता ।
सखीभिः सवयोभिस्तं चन्द्रहासमवैक्षत ॥ ४४ ॥

ध्यायन्ती मनसा देवीं पार्वतीं शंकरप्रियाम् ।
भर्तारं देहि मे देवि ! दाक्षायणि ! नमोऽस्तु ते ॥४५॥

इति चन्द्रहासोपाख्याने
चन्द्रहासमदनसम्भाषणं
नाम
पञ्चमोऽध्यायः

---

## षष्ठोऽध्यायः

अर्जुन उवाच—

अतः परं किमभवन्मदनो धृष्टबुद्धिजः ।
कथं विवाहमकरोद् विषयाचन्द्रहासयोः ॥ १ ॥

कथञ्च चन्दनावत्याः प्राप्तो मन्त्री स्वकं पुरम् ।
किमब्रवीत्स मदनं तन्ममाचक्ष्व नारद ! ॥ २ ॥

नारद उवाच—

अथ विप्रान्समाहूय ज्योतिःशास्त्रविशारदान् ।
पप्रच्छ मदनो लग्नं विषयाचन्द्रहासयोः ॥ ३ ॥

गणकास्त्वब्रुवन् वाक्यं मदनं प्रतिहर्षिताः ।
अद्यैव रुचिरं लग्नं सर्वदोषविवर्जितम् ॥ ४ ॥

गोधूलिकं वराहाद्यैरुदितं फलदं नृणाम् ।
तेषामाकर्ण्य वचनं मदनो हर्षनिर्भरः ॥ ५ ॥

आदिदेश पुरन्ध्रीस्ताः पातिव्रत्योपशोभिताः ।
स्नापयन्त्वद्य विषयां चन्द्रहासं पृथक् पृथक् ॥ ६ ॥

सजलैः कलशैरार्द्रपल्लवैस्तंतुभिर्युतैः ।
परिधाप्य च वासांसि समानयितुमर्हथ ॥ ७ ॥

रक्तचन्दनवर्णाढ्यो मदनस्तमुपाययौ ।
उत्तिष्ठोत्तिष्ठ भद्रं ते चन्द्रहास ! महामते !

पतिव्रताकरधृतैः कलशैः स्नाहि वारुणैः ॥ ८ ॥

नारद उवाच—

सुस्नातं चन्द्रहासं तं गृहे रम्ये न्यवेशयत् ॥ ९ ॥
मदनः साधुशब्दादिमधुपर्कमचीकरत् ।
जायया तारकाख्यया च पादप्रक्षालनं कृतम् ॥ १० ॥

तं चन्द्रहासं रमणीयवेशमन्तर्गृहे सोऽप्यनयत्स्मराढ्यः ।
स्वां कन्यकां तां विषयामथान्तरा चित्रां पटीं मन्त्रयुतैरधारयत्
पप्रच्छ गोत्रं मदनस्तदीयं पितुः पितुस्तत्पितुराशु नाम ।
स चन्द्रहासोऽप्यवदत् स्वगोत्रं हरिः स्वयं मे जनकः स एव १२
पितामहः स प्रपितामहश्च हरेर्न चान्योऽस्ति सुहृद्द्वितीयः ।
ऋते कुलिन्दाच्च गुरोर्मदीयादाधारशक्तेर्न च तस्य पत्न्याः १३
तच्चन्द्रहासीयमनन्यभावं वचो निशम्यार्थपतिः स्वकामात् ।
स्वसारमुच्चैरदाद् गिराऽस्मै लक्ष्मीपतिस्तृप्तिमुपैतु दानात् ॥१४॥
बद्धाञ्जली कुङ्कुमचर्चिताङ्गौ तौ दम्पती प्रापतुराशु वेदिम् ।
हुताशनं तर्पितमाज्यपूरैः परीयतुः सप्तपदान्ययाताम् ॥ १५ ॥
द्विजान्नमश्चक्रतुराशिषस्ताः स्वीचक्रतुः कान्तिमवापतुस्तौ ।
पतिव्रतानां तिलकानि भाले संदध्रतुः पत्रफलानि पाणौ ॥१६॥

ततोऽसौ मदनो हृष्टः प्रददौ मण्डनं बहु ।
गावश्च घटदोहिन्यो महिष्यः क्षीरसिन्धवः ॥ १७ ॥

मुक्ताफलानि रत्नानि स्वच्छानि विविधानि च ।
वासांस्यगुरुकर्पूरचन्दनानि च वीर्यवान् ॥ १८ ॥

दत्त्वा तु मदनो दध्यौ किमस्मै दीयते मया ।
चन्द्रहासाय चात्मानमर्पयामीति मे मतिः ॥ १९ ॥

मिषतां सर्वलोकानां मदनो वाक्यमब्रवीत् ।
इदं शिरः सरोजं च काले चास्मै गमिष्यति ॥ २० ॥

यदा कदाचिद्दास्यामि क्रीडनार्थं कराम्बुजे ।
यथायं चन्द्रहासो मे जामाता विषयान्वितः ।
पुत्रपौत्रैः परिवृतश्चिरकालं प्रशास्त्विमाम् ॥ २१ ॥

नानालङ्करणैर्वस्त्रैः पूजयित्वाऽथ गालवम् ।
मदनः प्रत्युवाचाथ द्विजानन्यांश्च याचकान् ॥ २२ ॥

प्रातः सर्वैरलंकार्यं गृहं पूज्यतमैर्मम ।
यथाशक्त्या किङ्करोऽहं पूजयिष्यामि चाखिलान् ॥२३॥

तान् विसृज्य द्विजान् सर्वांश्चन्द्रहासमभोजयत् ।
विषयासहितं कामो बुभुजे स्वजनान्वितः ॥२४॥

सुष्वाप मदनः किंचिद् ब्राह्मे जाते समुत्थितः ।
कृत्वात्मचिन्तनं पश्चादादिदेश वचोहरान् ॥२५॥

मण्डपं रचयन्त्वेके चित्रयन्त्वद्य मन्दिरम् ।
संमार्जयन्तु केचिच्च चन्दनोदकसेचनैः ।
उच्चैः क्रियन्तां विपुलाः पताका दण्डमण्डिताः ॥२६॥

नारद उवाच—

तैस्तदाकारि बीभत्सो ! सेवकैरथ निर्मला: ।
दिश: कुर्वन् समुदितो विनतातनयो विपात् ॥२७॥

कथयन्निव लोकानां स्वामिनं समुपागतम् ।
उत्थीयन्तां तु भो लोका: क्रियतां वैदिको विधि: ॥२८॥

उदयाचलकूटस्थो रवि: सन्निहितोऽभवत् ।
रात्रिजं प्राणिनां चित्तमोहध्वांतमपोथयत् ॥२९॥

विषयाचन्द्रहासौ तौ स्नापितौ विमलैर्जलै: ।
हरिद्राचम्पकस्नेहैरुद्वर्त्य च पुरन्ध्रिभि: ॥३०॥

परिधाप्य च वसांसि मुकुटाभ्यामलङ्कृतौ ।
तौ दम्पती ततो वेदीमागतौ स्त्रीपुरस्कृतौ ।
कृतस्वस्त्ययनौ विप्रैरुपविष्टौ वरासने ॥३१॥

अथ प्राप्ता द्विजा: पूज्या वेदशास्त्रविशारदा: ।
नराश्वगजदेहानां सम्यग्रक्षाचिकित्सका: ॥३२॥

मागधा नर्त्तका गीतशिक्षका वंशधारिण: ।
मृदंगवादका वेश्या: शैलूषा जलचित्रका: ॥३३॥

ऊर्ध्वं वंशं समारुह्य ये क्रीडन्ति नरा: क्षितौ ।
मुखाद्वह्नेर्महाज्वालामुत्सृजन्ति तथा च ये ॥३४॥

ढक्काडमरुजीवाश्च किन्नरा मधुरस्वरा: ।
सूता ये च पुराणस्थानुच्चरन्ति नृपान् सदा ॥३५॥

प्रेतलोकगताञ्छूरान् वर्णयन्ति च मागधाः ।
वर्तमानान् नृपान् सम्यग्ये तु संग्रामकारिणः ॥३६॥

वर्णयन्ति प्रबन्धैर्ये बन्दिनस्ते समाययुः ।
नानाबन्धेषु कुशला मल्लास्ते ब्रह्मचारिणाः ॥३७॥

एवं नानाविधैर्लोकैः संकीर्णं तस्य मन्दिरम् ।
मदनस्याभवत् पार्थ ! तूष्णीका न समागता ॥३८॥

अन्ये सर्वजनाः प्राप्ता लाभकौतुकवीक्षया ।
तेभ्यो रत्नानि वासांसि काञ्चनं प्रददौ बहु ॥३९॥

अनुक्रमात् स मदनो विनयाढ्यैर्वचोमृतैः ।
सुहृत्सम्बन्धिनः सर्वांस्तोषयामास भारत ! ॥४०॥

अकैतवं हृषीकेशं ध्यायन्ति मनसा सदा ।
तेषां विघ्नगणाः पार्थ ! किं करिष्यन्ति निर्बलाः ॥४१॥

विषमस्मै प्रदातव्यमिति हेतोश्च मन्त्रिणा ।
प्रेरितश्चन्द्रहासोऽयं विषयां प्राप कन्यकाम् ॥४२॥

इति चन्द्रहासोपाख्याने
चन्द्रहासविवाहो
नाम
षष्ठोऽध्यायः

---

## सप्तमोऽध्यायः

नारद उवाच—

तस्यां तु चन्दनावत्यां कुलिन्दं निगडैर्दृढैः ।
धृष्टबुद्धिर्विबन्धासौ दण्डयामास ताः प्रजाः ॥ १ ॥

कण्ठे बद्ध्वा शिलां तोये निमज्याऽर्थमयाचत ।
उपरिष्टात् कृशानोस्ताः प्रजा दध्रेऽर्थलिप्सया ॥ २ ॥

अतूतुदत् स मांसानि शस्त्रैश्च पुरवासिनाम् ।
अपाययच्चूर्णतोयं नासारन्ध्रेण कांश्चन ॥ ३ ॥

दण्डयित्वा प्रजाश्चैवं धृष्टबुद्धिरथोऽब्रवीत् ।
कुलिन्द ! त्वं हि रे मूढ ! मां न जानासि दारुणम् ॥ ४ ॥

चन्द्रहासाश्रयेण त्वं गर्वितोऽसि धनाऽऽगमात् ।
द्रव्यं तत्प्रेषितं मह्यं तेन सार्धं भवान् कथम् ॥ ५ ॥

नागतोऽसि विमूढात्मन् ! सेवकाः प्रेषितास्त्वया ।
मदीयं नाशितं द्रव्यं मन्दिरेषु त्वया व्ययात् ॥ ६ ॥

इत्थं निर्भर्त्सयामास कुलिन्दं धृष्टधीस्तदा ।
लोभमाहूय सचिवं सेवकं वाक्यमब्रवीत् ॥ ७ ॥

तृष्णया जायया सार्धं त्राहीमां चन्दनावतीम् ।
इति संदिश्य तं पश्चाद्ययौ कौन्तलकं पुरम् ॥ ८ ॥

हर्षेण महता युक्त आदाय विपुलं धनम् ।
पुत्रं मनसि संचिन्त्य चन्द्रहासं तथैव च ॥ ९ ॥

मदीयो मदनः पुत्रो विषं तस्मै प्रदास्यति ।
तृतीयो दिवसो ह्यद्य चन्द्रहासे गते सति ॥ १० ॥

एकेनाऽऽवाप नगरं द्वितीये वासरे रिपुम् ।
प्राप्तो नूनं स मदनः सायाह्ने तत्करिष्यति ॥ ११ ॥

यामेनैकेन यास्यामि कृतकार्यः पुरं प्रति ।
इति संचिन्त्य मनसा शिविकामारुरोह सः ॥ १२ ॥

ऊढां च त्रिशतैः पुम्भिर्मत्स्यभुग्भिर्महाबलैः ।
पार्थ ! गच्छन् धृष्टबुद्धिः पापात्मा दण्डमाददे ॥ १३ ॥

वैणवं ग्रन्थिलं दीर्घं ताडयामास धीवरान् ।
शीघ्रं गच्छत रे दुष्टा धीवरा मत्स्यभक्षकाः ! ॥ १४ ॥

तेऽब्रुवन्नृप ! गच्छामो मन्त्रिञ्छीघ्रतरं प्रभो ! ।
मा ताडय भृशं दण्डप्रहारैर्गच्छतो हि नः ॥ १५ ॥

नहुषस्य कुले जातो भवान् किं न मुनीश्वराः ।
वयं स्म भूप ! मन्युत्वाद्द्रोगिराजं न कुर्महे ॥ १६ ॥

सुवाते पोतवज्जग्मुर्धीवरा ढीवराश्च ते ।
उपर्युपरि डीयन्ते काकाः स्म शिविकां हठात् ॥ १७ ॥

चञ्च्वाभिघातं कुर्वन्ति पक्षतुण्डनखैश्च तम् ।
एवं पार्थाभवत्तत्र विद्धि पापस्य चेष्टितम् ॥ १८ ॥

तावत् पुरः प्रादुरभूद् विशालः
फणाभिराकाशमिवालिहन् वै ।

पुच्छं निवेश्य क्षितिपृष्ठ एव
प्रोवाच सर्पो नृगिरा विषाढ्यः ॥ १९ ॥

त्वदीयसौवर्णघटेषु नित्यं
वसामि रक्षंस्तव सूनुना तत् ।
स्थानं मदीयं किल नाशितं हि
गच्छामि ते स्वस्ति अलं विषादात् ॥ २० ॥

इत्येवमुक्त्वा वचनं सर्पः पातालमाविशत् ।
विसिस्माय स मूढात्मा नाजानाद् गूढपाद्वचः ॥ २१ ॥

धृष्टबुद्धिः पुनर्दण्डप्रहारैर्धीवरान् दृढम् ।
उत्तिष्ठंश्चर्वयन्नोष्ठौ दन्तैर्दन्तांश्च पीडयन् ॥ २२ ॥

युष्माकं चरणान् ग्रामं गत्वा छेत्स्यामि मा चिरम् ।
इत्थं स पीडयन् प्राप्तो धीवरान् कौन्तलं पुरम् ॥ २३ ॥

यामेनैकेन शुश्राव धृष्टधीस्तूर्यनिःस्वनम् ।
चिन्तयामास मनसा कार्यं पुत्रेण तत्कृतम् ॥ २४ ॥

नारद उवाच—

तस्माद् विमानादवरुह्य मूढः
पदातिरेकः प्रययौ पुरस्तात् ।
ददर्श सूतानथ मागधान् बहून्
स्वलङ्कृतान् वन्दिन एव वस्त्रैः ॥ २५ ॥

वन्दिन ऊचुः—

आगच्छ शीघ्रं धृष्टबुद्धे !
सुतेन कृतं कार्यं सूरिणा तत्तु सर्वम् ।
ब्रह्मायुस्ते चन्द्रहासस्य भूयात्
तथा सूनोर्मदनस्यातिदातुः ॥ २६ ॥

धृष्टबुद्धिरुवाच-

आः पापा ! रे वन्दिनश्चन्द्रहासः
कोऽसौ दूरात्सर्पत हन्मि दण्डैः ।
इत्यूचिवान् धृष्टबुद्धिः पुरस्तात्
पूज्यान् विप्रान् पूजितांश्चन्दनेन ॥ २७ ॥
नानाक्षौमैर्भूषितान् भूषणैश्च
गृहान् स्वीयानागतानन्वपश्यत् ॥ २८ ॥

विप्रा ऊचुः-

भूयादेवं स्वस्ति ते धृष्टबुद्धे !
कुतो लब्धश्चन्द्रहासो वरोऽयम् ।
भाग्योदयस्तव रम्यो विभाति
येनेदृशी कीर्तिरापूर्यते ते ॥ २९ ॥
निशम्य तेषां वचनं दुरात्मा
जज्वाल मन्त्री किल वाडवोऽब्धौ ।
दण्डं समुद्यम्य कुतः पुरस्ताद्
गमिष्यथेत्यादि जजल्प विप्रान् ॥ ३० ॥

विप्राः पलायन्ति विसृज्य वासः
कृष्णाजिनं ते तु ततः स्खलन्तः ।
विमुक्तकेशाः स्खलदुत्तरीय-
यज्ञोपवीताः पथि निःश्वसन्तः ॥ ३१ ॥
ततो हृष्टा गायका मन्त्रिणं ते
प्रोचू राज्यं चन्द्रहासो विधत्ताम् ।
स तांश्चक्रे भिन्नकपालवीणा-
मृदङ्गढक्काऽऽनकभेरिवंशान् ॥ ३२ ॥
पश्यंश्चित्रं द्वारि वर्णैर्विचित्रं
प्रायाद् द्वाराभ्यन्तरं धृष्टबुद्धिः ।
नीराजितुं चम्पकाङ्ग्योऽभिजग्मु-
र्दीपान्विताः कुङ्कुमचर्चिताश्च ॥ ३३ ॥
आह स्म ता धृष्टधीरुत्सवोऽयं
कस्मात्कृतः किं च लब्धं सुतेन ।
ऊचुर्मृगाक्ष्यस्तव सूनुनाद्य
लब्धो हितश्चन्द्रहासः कुलस्य ॥ ३४ ॥
दुष्टो मूढो धृष्टधीराह तस्मै
धनं दत्तं चन्द्रहासाय केन ॥ ३५ ॥

स्त्रिय ऊचुः—

मैवं ब्रूहि चन्द्रहासाय तस्मै
दत्ता कन्या विषया पुत्रकेण ।

तासां वचःशल्यविभिन्नगात्रो
विभ्रच्छोणे लोचने क्रोधयुक्तः ॥ ३६ ॥

ततः प्रायात् सप्तमद्वारमध्यं
यत्रास्तेऽयं द्वारपालो विवेकः ।

श्रद्धायष्टिस्तं च दृष्ट्वा ससार
प्राप्ते क्रोधे का विवेकस्य वार्त्ता ॥ ३७ ॥

अथापश्यद् धृष्टधीर्वेदिकायां
तं चन्द्रहासं विषयां च कन्याम् ।

बद्धाञ्जलां चन्द्रहासाञ्चलेन
पुष्पोद्गुम्फं मुकुटं विभ्रतीं च ॥ ३८ ॥

स्वेदो महान्वेपथुश्चास्य गात्रे
प्रादुर्बभूवाप्रतिमः शुष्कमास्यम् ।

क्रुद्धो दध्यौ किं कृतं मत्सुतेन
यन्नापश्यद् गूढपत्रं मदीयम् ॥ ३९ ॥

जामाताऽथो श्वशुरं वीक्ष्य पत्न्या
सहोत्थितः कुरुते स्म प्रणामम् ।

यथा व्याघ्रं बालमृगो विलोक्य
तथा चामुं नाभ्यनन्दद् गिरापि ॥ ४० ॥

अथ मदनमुपागतं प्रणम्रं
चरणयुगे वदति स्म धृष्टबुद्धिः ।

वद सुत ! किमकारि रे दुरात्मन् !
मम च मनो न हि तोषमाजगाम ॥ ४१ ॥

आह स्म तं मदनस्तात ! पत्रं
विलोक्याहं दत्तवान् स्वां स्वसारम् ।
वरायास्मै चन्द्रहासाय धेनू-
र्वासो हिरण्यं महिषीः कोटिशोऽद्य ॥ ४२ ॥

कस्मात्तातः क्रुध्यति मां विलोक्य
कोशागारं पश्य रिक्तं कृतं तत् ।
नानादेशादागतेभ्यो द्विजेभ्यो
दत्तं द्रव्यं वाचकेभ्योऽखिलेभ्यः ॥ ४३ ॥

नारद उवाच--

आः पापो हा धूनयन्स्वं कपालं
हस्ते हस्तं पेषयन्निःश्वसन् सः ।
प्रोवाचेदं धृष्टधीर्याहि घोरं
कान्तारं भिक्षस्व कृष्णाजिनी त्वम् ॥ ४४ ॥

मदन उवाच--

नैतच्चित्रं तात ! रामो वनं यत्
पितुर्वाक्यान्निरगात् पुण्यकीर्तिः ।
तथा वनं तव वाक्यात् प्रयास्ये
परं न्यूनं किं कृतं मे विवाहे ॥ ४५ ॥

नाहूतोऽयं देशपालः कुलिन्दः
तत्पत्नी वा किं करोम्यल्पकाले ।
" समायातस्तत्सुतो,ऽलेखि पत्रं
शीघ्रं, जह्या नो मुहूर्तं," त्वयेत्थम् ॥ ४६ ॥

किं वेदानीं यामि भूपं कुलिन्दं
समाहूयात्रानयिष्ये नमस्ये ।
न्यूनं नान्यद्भाति कन्याविवाहे
सर्वे दत्ता वाजिनो हस्तिनश्च ॥ ४७ ॥

धृष्टबुद्धिरुवाच—

दूरं प्रसर्प न मुखं मम दर्शयाद्य
पत्रं समानय निरीक्षत तत्र किंस्वित् ।
तेनाहृतं पत्रमपश्यदेष
मन्त्री विधातुर्लिपिमन्वमंस्त ॥ ४८ ॥

क्षणं दध्यौ सान्त्वयामास पुत्रं
सत्यं त्वदीयं किल वीक्षितञ्च ।
मया त्वसौ चन्द्रहासो विसृष्ट-
स्तथा पत्रं लिखितं गूढभावम् ॥ ४९ ॥

जातो दैवाद्विषयाया विवाहो
नाहं कर्त्ता न भवान्नापरोऽपि ।
इत्थं समाश्वास्य सुतं दुरात्मा
तं चन्द्रहासं परिपूज्य दम्भात् ॥ ५० ॥

जाते चतुर्थे दिवसे चतुर्थी-
कर्म व्यधात् कैतवाद् धृष्टबुद्धिः ।
ततः परं दूयमानः स राजन् !
कर्ता किमत्राद्य विपक्षपक्षे ॥ ५१ ॥

कृतं मया ह्येकमहो द्वितीय-
मग्रे कथं कार्यममुष्य शत्रोः ।
इत्थं निमग्नः स तु शोकसिन्धौ
कर्तव्यनौकारहितेऽल्पबुद्धिः ॥ ५२ ॥

इति चन्द्रहासोपाख्याने
धृष्टबुद्धिसंतापो नाम
सप्तमोऽध्यायः

---

## अष्टमोऽध्यायः

नारद उवाच—

धृष्टधीश्चिन्तयामास विपरीतमभून्न मम ।
दत्ता तु विषया कन्या वध्यायास्मदरातये ॥ १ ॥
अतः परं मया कार्यं किं कं गच्छामि बान्धवम् ।
पुत्रोऽयं मद्वशे नैव वर्त्तते मदनोऽमलः ॥ २ ॥
आभ्यां मदीयं हि कुलं पुत्राभ्यां नाशितं ध्रुवम् ।
चन्द्रहासो विशेषेण नाशयिष्यति मत्कुलम् ॥ ३ ॥
विषया विधवा भूयात्करिष्याम्यनृतं वचः ।
मुनीनामिति संचिन्त्य चाण्डालांस्तानथाह्वयत् ॥ ४ ॥
एकान्ते संस्थितः पापः संदिदेश शनैः शनैः ।
चण्डिकायतनं बाह्ये पुरादुपवने शुभे ॥ ५ ॥
करवालकराः सर्वे तत्र गच्छत मौनिनः ।
गूढं तस्य स्थिताः कोणद्वये निश्चलमानसाः ॥ ६ ॥
जाते पितृप्रसूकाले यः कश्चिदपि यास्यति ।
भवद्भिः स हि हन्तव्यो मा विचारयत ध्रुवम् ॥ ७ ॥
पूर्वं यथा वञ्चितोऽहं तथा मा कुरुताधुना ।
युष्माकं संपदामर्धं प्रदास्ये मदनांशकम् ॥ ८ ॥
तस्य वाक्यं समाकर्ण्य तेऽन्त्यजाश्चण्डिकालयम् ।
जग्मुः प्रच्छन्नवेषाश्च तृतीयप्रहरे सति ॥ ९ ॥

धृष्टबुद्धिश्चन्द्रहासं विनयाद् वाक्यमब्रवीत् ।
चन्द्रहास ! महाप्राज्ञ ! शृणु मे वचनं हितम् ॥ १० ॥
अस्माकं हि कुले देवी चण्डिका पूज्यते किल ।
कृतोद्वाहो भवानद्य तां नमस्कुरु मातरम् ॥ ११ ॥
सायं सन्ध्यां विधायाशु पुष्पाण्यादाय चन्दनम् ।
एकः प्रयाहि तां देवीं पुरबाह्यकृतालयाम् ॥ १२ ॥
पूजितुं च नमस्कर्त्तुमित्यादिश्य कुधीः स्थितः ।
ओमित्युक्त्वा ततो वाक्यं चन्द्रहासो ह्यकैतवात् ॥ १३ ॥
स सन्ध्यावन्दनं कृत्वा गन्तुकामो बभूव ह ।
अम्बिकालयमेवासौ चन्द्रहासो महायशाः ॥ १४ ॥

नारद उवाच—

एतस्मिन्नन्तरे पार्थ ! राजा कौन्तलपः सुधीः ।
गालवं तं समाहूय देहचेष्टामथाब्रवीत् ॥ १५ ॥
स्वामिन् गालव ! भूलोके राज्यं मे कुर्वतो न हि ।
सुखमस्ति तनुच्छायामशिरस्कां विलोकये ॥ १६ ॥
उत्क्रान्तिसमयो मेऽद्य समायातो न संशयः ।
हितोपदेशमाख्याहि यं श्रुत्वा निर्वृतिं लभे ॥ १७ ॥

गालव उवाच—

सारभूतमुपासीत ज्ञानं यत्कार्यसाधनम् ।
इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
अपि कल्पसहस्रायुर्न स ज्ञानमवाप्नुयात् ॥ १८ ॥

त्यक्तसङ्गो निराहारो जितक्रोधो जितेन्द्रियः ।
विषयेभ्यो निवर्त्याशु मनो ध्याने निवेशयेत् ॥ १९ ॥

नारद उवाच—

योगसारं समाकर्ण्य गालवान्मुनिपुङ्गवात् ।
राज्यं त्यक्तुमनाः सोऽथ जीर्णां त्वचमिवोरगः ।
तत्रोपविष्टं मदनं समाहूयेदमब्रवीत् ॥ २० ॥

राजा कौन्तलपस्तस्य कर्णे जामातरं स्वकम् ।
समानयाशु मदन ! करिष्ये ह्यात्मनो हितम् ॥ २१ ॥

बाढमित्यालपित्वा स प्रायाज्जामातरं प्रति ।
सूर्ये जपाप्रसूनाभे ह्यस्तं गिरिमुपाश्रिते ॥ २२ ॥

ददर्श चन्द्रहासं तं कृतसन्ध्याविधिं शुचिम् ।
पुष्पकर्पूरकस्तूरीचन्दनाम्बरधारिणम् ॥ २३ ॥

हरिद्राकुङ्कुमोन्मर्दगौराङ्गं मुकुटावृतम् ।
एकाकिनं समायान्तं पथि दृष्ट्वाऽब्रवीत्स्मरः ॥ २४ ॥

अयि त्वं चन्द्रहासाशु कुतो व्रजसि तद् वद ।
चन्द्रहासोऽब्रवीद्वाक्यं पित्राहं प्रेरितस्तव ॥ २५ ॥

चण्डिकाञ्च नमस्कर्तुं महिषघ्नीं बहिः स्थिताम् ।
वारयामास मदनस्त्वं याहि नृपमन्दिरम् ॥ २६ ॥

देहि चन्दनपुष्पाणि त्वं नृपं त्वरितं व्रज ।
इत्युक्त्वा पुष्पमालाढ्यं पात्रमाच्छिद्य तत्करात् ॥ २७ ॥

ययौ स मदनश्चैकश्चण्डिकाभवनं तदा ।
अवतीर्य हयात्तस्मात् सेवकान् विनिवार्य च ॥ २८ ॥
व्रतभङ्गभयात् पार्थ ! छत्रचामरवर्जितः ।
चन्द्रहासस्तमारुह्य वाजिनं च प्रयत्नतः ॥ २९ ॥
तैरेव सेवकैः सार्धं छत्रचामरवीजितः ।
प्राप कौन्तलपं वेगान्नमस्कृत्य पुरः स्थितः ॥ ३० ॥
चन्द्रहासं समालोक्य राजा कौन्तलपोऽब्रवीत् ।
स्वामिन् गालव ! यास्यामि वनं त्यक्त्वा परिच्छदम् ॥ ३१ ॥
सर्वसङ्गपरित्यागं पात्रे कुर्वेऽद्य वैष्णवे ।
ओमित्युक्तः स मुनिना ददौ चम्पकमालिनीम् ॥ ३२ ॥
चन्द्रहासाय निखिलं राज्यं प्रादादवाङ्मुखः ।
परित्यज्य च वस्त्राणि वनमागाद् विरक्तिभाक् ॥ ३३ ॥
पश्यंस्तुच्छमिमं सर्वं स देवासुरमानुषम् ।
पाशैर्गुणमयैर्बद्धं बध्यमानं च नित्यशः ॥ ३४ ॥
पुत्रस्वभ्रातृपौत्रादिस्वपारक्यादिभावितैः ।
आकृष्यमाणं करणैर्दुःखार्तं भिन्नदर्शनम् ॥ ३५ ॥
अज्ञानपङ्कगर्तस्थमनुबुद्ध्वा महीपतिः ।
आत्मानं च समुत्तीर्णं गाथामेतामगायत ॥ ३६ ॥
अहो ! कष्टं यदस्माभिः पूर्वं राज्यमनुष्ठितम् ।
अपि पश्चान्मया ज्ञातं योगान्नास्ति परं सुखम् ॥ ३७ ॥

नारद उवाच—

इत्थं संसारपाशेभ्यो मुक्तः कौन्तलपो नृपः ।
सिंहासने चन्द्रहासं गालवः सोऽभ्यषेचयत् ॥ ३८ ॥

गान्धर्वेण विवाहेन तदा चम्पकमालिनीम् ।
परिणिन्ये चन्द्रहासः सूर्येऽस्तं याति पाटले ॥ ३९ ॥

नारद उवाच—

पुष्पाणि च समादाय गच्छन्स मदनः पथि ।
ददर्श युध्यत्पुरतो विडालद्वयमातुरम् ॥ ४० ॥

हस्ताच्चन्दनपुष्पाणां पात्रं भूमावथापतत् ।
रुधिरं प्रास्रवन्नेत्रान्मदनस्य मुखात्तथा ॥ ४१ ॥

उलूकः स च वै मूर्ध्नि स्थितवान् भीमनिःस्वनः ।
तथाप्यगणयन् पार्थ ! मदनो वाक्यमब्रवीत् ॥ ४२ ॥

अपि स्वस्ति भवेत्तस्मै चन्द्रहासाय धीमते ।
इत्येवं चिन्तयन्प्राप मदनश्चण्डिकालयम् ॥ ४३ ॥

अवाङ्मुखः सन्स विवेश धीमान्
कपाटयुग्मं प्रहरन् करेण ।
शब्दं समाकर्ण्य च ते पशुघ्नाः
शस्त्राणि यत्नाज्जगृहुः प्रमत्ताः ॥ ४४ ॥

कर्णे लगित्वा शनकैरवोचन्
द्विजघ्न ! धेनुघ्न ! शिशुघ्न ! कश्चित् ।

प्राप्तो मुमूर्षुस्तदिहात्र जन्तुः
स्वनामवैयर्थ्यमहो न कार्यम् ॥ ४५ ॥

न लङ्घनीयः कुलधर्म एष नीतिस्ततो हिंस्युरमुं च शूलैः ।
अथ प्रविष्टं मदनं सुवेषं दक्षं पितुर्वाक्यकरं पशुघ्नाः ।
शूलैश्च खड्गैर्निशितैश्च पट्टिशैर्जघ्नुस्तदा प्राह सुतः सुमन्त्रिणः ४६

हे चण्डिके ! वैष्णवि नो लुलायो
दैत्यो निशुम्भोऽपि न शुम्भ एव ।
न रक्तबीजोऽहमिहागतस्त्वां
कस्माच्च शूलैरभिहंसि मातः ! ॥ ४७ ॥

न प्रार्थयाम्यद्य च जीवितार्थं
त्वं साक्षिणी मे वचनस्य भूयाः ।
यच्चन्द्रहासार्थमभाणि बाहू
शिरः प्रदास्ये ह्यनृणोऽहमासम् ॥ ४८ ॥

इत्यूचिवान् मन्त्रिपुत्रस्तदानीं
जहौ प्राणानुच्चरन् माधवेति ।
चण्डालास्ते प्रस्फुरद्वाक्यभीता
जग्मुस्ते वै को हतोऽस्माभिरेव ॥ ४९ ॥

इति चन्द्रहासोपाख्याने
कुन्तलपुरराज्यप्राप्ति-
र्नामाऽष्टमोऽध्यायः

---

## नवमोऽध्यायः

नारद उवाच—

राज्यं लब्ध्वा चन्द्रहासः पत्नीं चम्पकमालिनीम् ।
शुभे गजे तया सार्धमारुरोह निशागमे ॥ १ ॥
नमस्कर्तुं धृष्टबुद्धिं मृदङ्गध्वनिशोभितः ।
आजगाम त्वरायुक्तो दिदृक्षुः श्वशुरं नृप ! ॥ २ ॥
शंसन्ति स्म वचस्तस्मै मन्त्रिणे च वचोहराः ।
मन्त्रिन् ! समागतं पश्य चन्द्रहासं नृपं नवम् ॥ ३ ॥
जामातरं तव विभो ! राज्ञः कौन्तलपस्य च ।
तेषां वचनमाकर्ण्य क्रोधान्मन्त्री वचोऽब्रवीत् ॥ ४ ॥
युष्माकं रसनां छेत्स्ये मूलमारभ्य पापिनाम् ।
कोऽन्यः कौन्तलपाद्राजा भविष्यति धरातले ॥ ५ ॥
वचोहरा ब्रुवन्ति स्म स्वामिन् ! दृष्ट्यावलोकय ।
तावत्प्राप्तश्चन्द्रहासो जायया सहितः पुरः ॥ ६ ॥
ददर्श धृष्टबुद्धिस्तं नेत्रे स्वे परिमार्जयन् ।
उताहो स्वित्सुतः प्राप्तो मदनोऽयं भविष्यति ॥ ७ ॥
पुरतो विद्यते कन्या यथा चम्पकमालिनी ।
उवाचोच्चैस्तदा मन्त्री रे रे मदन ! किं कृतम् ॥ ८ ॥
इति चिन्तयतस्तस्य चन्द्रहासः पुरः स्थितः ।
अवतीर्य गजात्तस्मात्पादौ जग्राह मन्त्रिणः ॥ ९ ॥

चुबुके धृष्टबुद्धिस्तं दधार, न भवान् गतः ।
चण्डिकाभवनं रम्यं, गोत्रस्थितिविनाशकृत् ! ॥ १० ॥

चन्द्रहास उवाच—

यावद् गच्छाम्यहं स्वामिन् ! पुष्पचन्दनपात्रभृत् ।
तावत् कौन्तलपादेशकारको मदनश्च माम् ॥ ११ ॥

वारयामास पश्चाच्च स्वयं देवीं जगाम सः ।
तत्तस्य वचनं श्रुत्वा कठोरं मर्मभेदि च ॥ १२ ॥

ऊर्ध्वबाहुर्मुक्तकेशो मन्त्री स विलपन् ययौ ।
परार्थं योऽवटं कर्ता तस्मिन् स पतति ध्रुवम् ॥ १३ ॥

तस्मात् सर्वप्रयत्नेन प्राणिनां हितमाचरेत् ।
उत्तिष्ठन्निपतन् भूमौ ध्वान्ते घोरे स्थितः पथि ॥ १४ ॥

धृष्टबुद्धिर्जगामाशु चण्डिकाभवनं प्रति ।
ददर्श पुत्रं मदनं खड्गशूलविदारितम् ॥ १५ ॥

दृष्ट्वा तं मदनं पुत्रं तथा छिन्नमनोरथः ।
स्वकीयस्यैव वंशस्य छिन्नं मूलं स धृष्टधीः ॥ १६ ॥

परित्यज्य चिताकाष्ठं पश्यन् स सुतमातुरः ।
आलिलिङ्ग तथाभूतं समुत्थाप्य च पाणिना ॥ १७ ॥

धृष्टबुद्धिरुवाच—

उत्तिष्ठोत्तिष्ठ रे पुत्र ! चन्द्रहासः समागतः ।
तस्मै त्वं विषयां कन्यां प्रदेहि विपुलं धनम् ॥ १८ ॥

मया त्वं कठिनैर्वाक्यैः पीडितोऽसि प्रकोपितः ।
इत्थं विलप्य बहुधा धृष्टधीः स्वशिरस्तदा ।
आस्फालयामास भृशं स्तम्भे धातुविभूषिते ॥ १९ ॥

स भिन्नमस्तको भूमौ स्फुटिताण्डमिवापतत् ।
तस्मिन्निपतिते पार्थ ! धृष्टबुद्धौ च तत्सुते ॥ २० ॥

प्रभातसमये जाते तापसः पुष्पतोयभृत् ।
चण्डिकाभवनं प्रायात् स्नापितुं पूजितुं च तां ॥ २१ ॥

प्राविशद् भवनं देव्याः स लिङ्गी पुरतो मृतौ ।
धृष्टधीमदनौ शान्तौ दीपाविव ददर्श ह ॥ २२ ॥

आहो स्वित् किं बभूवात्र नवराज्यफलं स्फुटम् ।
मन्त्रिपुत्रावपि हतौ नृपकौन्तलश्रियौ ।
आगतश्चन्द्रहासाय तापसः शंसितुं तदा ॥ २३ ॥

तापस उवाच—

केनापि निहतौ राजन् ! धृष्टधीमदनौ बहिः ।
चण्डिकाभवने रात्रौ तच्छीघ्रमवधार्यताम् ॥ २४ ॥

तस्य वाक्यं समाकर्ण्य पद्भ्यामेवागतो नृपः ।
चन्द्रहासः सुदुःखार्त्तो देव्या भवनमातुरः ।
ददर्श पुरतो देव्याः पितापुत्रौ च तादृशौ ॥ २५ ॥

चन्द्रहासोऽब्रवीद्वाक्यं हे मातश्चण्डिके ! मयि ।
क्रुद्धाऽसि चेन्मां गृहाण त्वया ह्येतौ वृथा हतौ ॥ २६ ॥

कुण्डं खनित्वा रुचिरं चतुरस्रं सुलक्षणम् ।
तस्मिन् पावकमारोप्य बलिदीपपुरःसरम् ॥ २७ ॥
जुहावाज्यतिलान् रम्यान् पायसं सितया सह ।
स्वदेहमांसमुद्धृत्य सूक्तं जप्त्वा जुहाव सः ॥ २८ ॥
सर्वं मांसं चन्द्रहासो हुत्वा पादशिरोधरान् ।
अस्थीनि धारयन् शीर्षे प्राह स्म जगदम्बिकाम् ॥ २९ ॥
चराचरगुरोर्विष्णोश्चिच्छक्तिस्त्वमुदाहृता ।
सर्वेषां कर्मणां मातः ! साक्षिणी त्वं पृथक् स्थिता ॥ ३० ॥
अधुना छेद्मि खड्गेन शिरस्तेन जगत्पतिः ।
प्रीयतां स हृषीकेशस्त्वद्रूपः कालिकेऽम्बिके ! ॥ ३१ ॥
इत्येवमुक्त्वा तं खड्गं यावत् कण्ठे दधार सः ।
तावत् प्रादुर्बभूवैषा चण्डिका प्राह तं नृपम् ॥ ३२ ॥
मैवमात्मवधं कार्षीरेष पापः कुकर्मणा ।
पञ्चत्वमगमन्मन्त्री तत्सुतोऽप्यददादृणम् ॥ ३३ ॥
त्वदीयं यत्पुरा प्रोक्तं विवाहसमये स्वसुः ।
प्रसन्नाहं हरेर्भक्त ! चन्द्रहास ! तवाधुना ।
वरौ प्रार्थय भद्रं ते स्वेच्छया मानसौ ध्रुवम् ॥ ३४ ॥

चन्द्रहास उवाच—

हरौ भक्तिः सदा भूयान्मम जन्मनि जन्मनि ।
वरोऽयं प्रथमो मातर्द्वितीयेन मृतौ त्विमा ।
पितापुत्रौ प्रजीवेतां जगत्पावनि ! ते नमः ॥ ३५ ॥

श्रीदेव्युवाच—

अचला ते हरौ भक्तिर्भविष्यति च सात्विकी ।
पुत्रोऽपि भविता शूरस्तोषयिष्यति यो हरिम् ॥ ३६ ॥
चन्द्रहास ! महाप्राज्ञ ! आयाहि पुरतो मम ।
स्थिरो भव मुहूर्तार्धं पिधाय नयने स्वके ॥ ३७ ॥

नारद उवाच—

ततस्तावेव सोऽपश्यद् धृष्टधीमदनौ नृप ! ।
तादृग्रूपवयोवेषौ यथा सुप्तोत्थितौ हि तौ ॥ ३८ ॥
आत्मानं पूर्ववच्चापि निर्व्रणं चन्दनार्चितम् ।
न तां ददर्श जननीं जगदम्बां हरेस्तनुम् ॥ ३९ ॥
खात्पुष्पवृष्टिं पतितां सुरमुक्तां विलोक्य च ।
नमश्चक्रे धृष्टबुद्धिं चन्द्रहासः स्मरं तथा ॥ ४० ॥
समालिङ्ग्य सुसंपूज्य श्वशुरं वाक्यमब्रवीत् ।
हरेर्माया त्वियं सर्वा कश्च जीवति को मृतः ॥ ४१ ॥

नारद उवाच—

एवं स वैष्णवः पार्थ ! व्यसनेन न पीडितः ।
प्रविवेश समं ताभ्यां चन्द्रहासः पुरं निजम् ॥ ४२ ॥

अर्जुन उवाच—

दैवात् प्राप महद्राज्यं चन्द्रहासो महामुने ! ।
कुलिन्देन तु पश्चाच्च दुःखितेन तु किं कृतम् ॥ ४३ ॥

नारद उवाच—

शृणु पार्थ ! महाप्राज्ञ ! कुलिन्दस्य च चेष्टितम् ।
गतेऽथ चन्द्रहासे स पीडितो धृष्टबुद्धिना ॥ ४४ ॥

विचार्य मनसा देवं हरिं बन्धविमोक्षदम् ।
धनं तद् ब्राह्मणेभ्यस्तु दत्वा निर्वेदमागमत् ॥ ४५ ॥

पुत्रं मे चन्द्रहासाख्यं त्वद्भक्तं त्वत्परायणम् ।
त्वया दत्तं हृषीकेश ! रक्षास्मात्पापचेष्टितात् ॥ ४६ ॥

इत्युक्त्वा स्वगृहे तस्मिन् सपत्नीकः सबान्धवः ।
प्राविविक्षद् हुताशं स निर्विण्णो ध्यानतत्परः ॥ ४७ ॥

एतस्मिन्नन्तरे लोका धृष्टबुद्धौ न्यवेदयन् ।
स्वामिन् ! कुलिन्दो नृपतिः सर्वदा हितकृत्तव ॥ ४८ ॥

दुःखात् सपरिवारोऽसौ विशति स्म हुताशनम् ।
इति तेषां वचः श्रुत्वा प्रेरितो हरिणा ययौ ॥ ४९ ॥

विचार्य मनसा सम्यक् पुत्रोऽस्य निहतो मया ।
किमर्थं घातयाम्येनं वृद्धं धनविवर्जितम् ॥ ५० ॥

पुत्रहीनो मृतो ह्येष दैवेन हि निपातितः ।
एवं विमृश्य मनसा शीघ्रं गत्वा न्यवारयत् ॥ ५१ ॥

मा कुलिन्द ! विषादं त्वं कुरु द्रव्यापहारजम् ।
पुनर्दास्यामि ते वित्तं देशं च विविधं वसु ॥ ५२ ॥

इति नानाविधैर्वाक्यैराश्वस्तः स कुलिन्दकः ।
पुत्राशां परमां कृत्वा उत्थितः प्रणनाम तम् ॥ ५३ ॥

धृष्टबुद्धिस्त्वाजगाम तं निवार्य स्वमन्दिरम् ।
कुलिन्देन श्रुतं सर्वं चन्द्रहासेन यत्कृतम् ॥ ५४ ॥

तच्छ्रुत्वा हर्षसंपन्नो हरिं नत्वा द्विजान् धनैः ।
पूजयामास धर्मात्मा याचकानथ सर्वशः ॥ ५५ ॥

चन्द्रहासोऽपि तद्राज्यं लब्ध्वा तानर्चयद् द्विजान् ।
स्वयं तु बन्धुभिः सार्धं मदनेन द्विजातिभिः ॥ ५६ ॥

आनयामास पितरं मातरं पुत्रवत्सलाम् ।
ततः कौन्तलके राज्यं चकाराब्दशतत्रयम् ॥ ५७ ॥

विषयाऽसूत तनयं मकरध्वजमूर्जितम् ।
असूत शूरं पद्माक्षं सुतं चम्पकमालिनी ॥ ५८ ॥

इत्युक्त्वा नारदः प्रायादर्जुनो विस्मयं ययौ ।
सतां सङ्गाद् विना लोके लभ्यते न सुखं नरैः ॥ ५९ ॥

इति धृष्टबुद्धिमदनपुनरुज्जीवनं
नाम
नवमोऽध्यायः
समाप्तं च चन्द्रहासोपाख्यानम्

---

# कुशलवोपाख्यानम्

## प्रथमोऽध्यायः

जैमिनिरुवाच—

अयोध्यायां दाशरथिः शयानः किल सीतया ।
एकदा रात्रिसमये हृष्टः सीतां वचोऽब्रवीत् ॥ १ ॥

राम उवाच—

दोहदः कीदृशो भद्रे ! कस्मिन् वस्तुनि तद्वद ।
सीता तद्वचनं श्रुत्वा भर्तारमिदमब्रवीत् ॥ २ ॥

सीतोवाच—

तव प्रसादान्मे कामः परिपूर्णः सदाऽनघ ! ।
परं भागीरथीतीरे गन्तुमिच्छामि राघव ! ॥ ३ ॥

ऋषिपत्न्यश्च यत्रासन्नृषयोऽजिनवाससः ।
जहास रामः किमिदं न तृप्ता वनवासतः ॥ ४ ॥

सीते ! त्वं दण्डकारण्ये वर्षाणि नव पञ्च च ।
अद्य वा दोहदस्तेऽयं प्रथमो निष्फलः कथम् ॥ ५ ॥

प्रातर्भागीरथीतीरे गमनं तेऽस्तु जानकि ! ।
इति तस्यै प्रतिश्रुत्य सुष्वाप ससुखं प्रभुः ॥ ६ ॥

निशीथे तु व्यतिक्रान्ते चाराः पुरचरा निशि ।
रामं रहःसमागम्य वाक्यमूचुः पृथक् पृथक् ॥ ७ ॥

तव कीर्तिप्रतापश्च सर्वतो वर्ण्यते जनैः ।
रामः पृच्छत्यतिदृढं लोकानां कीदृशी स्थितिः ॥ ८ ॥

मम वा मम भार्याया भ्रातॄणां दुष्कृतं किल ।
सुकृतं वा त्वया चार ! भ्रमता निशि यच्छ्रुतम् ॥ ९ ॥

तत्सत्यं वद चार ! त्वं मा भीतिं कुरु दण्डतः ।
चारोऽपि रघुनाथं तं प्रत्युवाच हसन्निव ॥ १० ॥

चार उवाच—

राम ! त्वद्दर्शनादेव दुष्कृतं भस्मसाद्भवेत् ।
तत्रापि दुष्कृतं मन्ये विपरीतं रघूद्वह ! ॥ ११ ॥

वयं स्थानानि पापानि भ्रमामो रघुनन्दन ! ।
त्वां दृष्ट्वा सर्वपापेभ्यो मुच्येम भरताग्रज ! ॥ १२ ॥

तथाऽपि लोको दुर्वारः किंचिद् दुष्टं वदत्यसौ ।
निशार्धे भ्रमता राजन् ! दृष्टं चित्रतरं मया ॥ १३ ॥

कस्यचिद्रजकस्यास्यां पुर्यां भार्याऽत्यगाद् गृहम् ।
पितुर्वेश्म समासाद्य तस्थौ दिनचतुष्टयं ॥ १४ ॥

रजक्या जनकश्चिन्तामगमत् किं मया कृतम् ।
स्मृत्यागमविरुद्धं हि कन्या यत् पितृवेश्मनि ॥ १५ ॥

तस्माद् दुहितरं चैतां नयिष्ये भर्तृसन्निधिं ।
यथाम्बरस्थं कलुषं शोधयेऽहं स्वकैः करैः ॥ १६ ॥

तथा स्थितायां कन्यायां गृहे यत्तन्न शोध्यते ।
इत्युक्त्वा भ्रातृभिः सर्वै रजकः परिवेष्टितः ॥ १७ ॥
जामातरं समासाद्य कन्यां तस्मै न्यवेदयत् ।
ततः क्रुद्धोऽब्रवीद्वाक्यं सृक्विकणी परिलेलिहन् ॥ १८ ॥
जामाता हस्तमुद्यम्य रामोऽहमिति वो मतिः ।
राक्षसानां गृहे सीतां वसन्तीमाजहार यः ॥ १९ ॥

एतावदेव रघुनन्दन ! सोऽब्रवीत्तद्वाक्यं
पुनः पुनरिदं रजकोऽत्र कोपात् ।
राज्ञा समर्थपदवीमधितिष्ठुता तद्
रामेण चेत्कृतमहं न तथा करोमि ॥ २० ॥

इत्थं वचांसि स्म वदत्यवश्यं
नान्य जनो वक्तुमलं बभूव ।
ततो मया वाक्यमिदं विविक्तं
सत्यं ब्रवीत्येष कुतो हि रामः ॥ २१ ॥

गङ्गातटद्वीपनिखातयूपः
स्वधर्मनिष्ठः पितृवाक्यकर्त्ता ।
जेता दशास्यस्य जगच्छरण्यः
स राघवः केन समोऽस्ति लोके ॥ २२ ॥

आचारेषु निषण्णोऽयं न गुणेषु च सस्पृहः ।
मूढो न वेत्ति तं रामं गुणिनं रजको ह्ययम् ॥ २३ ॥

मनसा चिन्तयित्वैवं राम ! त्वामहमागमम् ।
दूतं तं तु विसृज्याशु चिन्तयामास राघवः ॥ २४ ॥

शुद्धाऽपि जानकी वह्नौ लोकेऽस्मिन् परिगर्ह्यते ।
तस्मात्त्यजेयं नो वेति चिरं दध्यौ स जानकीम् ॥ २५ ॥

कथं तां मृगशावाक्षीं सीतां पद्मनिभाननां ।
त्यजामि श्रोत्रियो मुख्यामाचारस्येव पद्धतिम् ॥ २६ ॥

अथ चेमां परित्यक्ष्ये कलौ विप्रा यथा श्रुतिम् ।
इति चिन्तयतस्तस्य प्रातःकालोऽभवत्तदा ॥ २७ ॥

जैमिनिरुवाच—

ततोऽसौ जानकीत्यागे मनःकृत्वा रघूद्वहः ।
आह्वयामास भरतं शत्रुघ्नं लक्ष्मणं तथा ॥ २८ ॥

एतस्मिन्नन्तरे प्राप्तो भरतो लक्ष्मणस्तथा ।
शत्रुघ्नश्च महाबाहुः सेवितुं रघुनन्दनम् ॥ २९ ॥

ददृशुस्ते ततो रामं विषण्णं दीनचेतसम् ।
प्रोचुस्तेऽन्योन्यमासीनं रामं शीघ्रं न चागताः ॥ ३० ॥

तस्मात्किं कुपितो भ्राता दृष्ट्वाऽस्मान्दानवर्जितान् ।
किमस्माभिर्द्विजश्रेष्ठाः प्रातर्नो पूजिता इति ॥ ३१ ॥

न प्रातर्जाग्रताः किं वा किं वा शीघ्रं नमस्कृताः ।
इत्येतत्संवदन्तस्ते भ्रातरो वह्नितेजसः ॥ ३२ ॥

आयाता रघुनाथं तं नमस्कृत्येदमब्रुवन् ।
त्वन्मनस्कान् सदा राम ! त्वत्समर्पितकर्मणः ॥ ३३ ॥

त्वद्दर्शनसमुत्कण्ठान् किमस्मान्नाभिनन्दसे ।
रामस्तेषां वचःश्रुत्वा स शनैर्वाक्यमब्रवीत् ॥ ३४ ॥

इति कुशलवोपाख्याने
रामवाक्यं नाम
प्रथमोऽध्यायः

---

## द्वितीयोऽध्यायः

जैमिनिरुवाच—

रामस्तु कथयामास चारेणोक्तं यथा निशि ।
सीता च गर्ह्यते लोकैर्यथा पाखण्डिभिः श्रुतिः ॥ १ ॥

लोकापवादभीतेन त्यज्यते जानकी मया ।
संसारभयभीतेन योगिना ममता यथा ॥ २ ॥

तद्रामवाक्यमाकर्ण्य वज्रपातोपमं तदा ।
भ्रातरस्ते त्रयोऽभूवन् रोमाञ्चितवपुर्धराः ॥ ३ ॥

अब्रवीद्भरतस्तेषां रघुनाथमिदं वचः ।
कृपालुस्त्वं रामचन्द्र ! त्वय्येव परिगीयते ॥ ४ ॥

अन्त्यजेभ्यो बलात्कश्चित् कपिलां गां समानयेत् ।
पश्चात्संसर्गदुष्टत्वात् त्यजेत्तां विपिने तु कः ॥ ५ ॥

जानकीं त्वं तथादाय राक्षसात्त्यक्तुमिच्छसि ।
सीता तुभ्यं ददौ शुद्धिमात्मनोऽग्निमुखे परा ॥ ६ ॥

तत्त्वया विस्मृतं राम ! किं वा पित्रा पुरोदितम् ।
वह्नौ प्रदीप्ते ज्वालाभिर्लिहन्तीभिरिवाम्बरम् ।
सीतायां च प्रविष्टायां तदा दशरथोऽब्रवीत् ॥ ७ ॥

विमानस्थोऽम्बरे राम ! त्वां प्रतीदृग्वचः शुभम् ।
इमां शुद्धां विद्धि पुत्र ! जानकीं भर्तृतत्पराम् ॥ ८ ॥

अस्याश्चरित्रेण कुलं नः सर्वं विमलीकृतम् ।
ये मृताः पुत्रशोकेन तेषां गतिरनुत्तमा ॥ ९ ॥
जानकी नः स्नुषा येन तेन वासस्त्रिविष्टपे ।
एतद्दशरथेनोक्तं वचनं विस्मृतो भवान् ॥ १० ॥
ब्रह्मादिभिर्देवगणैर्यत्प्रोक्तं तच्च संस्मर ।
वह्नौ विशुद्धा वैदेही फुल्ला सत्कलिका यथा ॥ ११ ॥
गुम्फिता वानरैर्दृष्टा मालेव रघुसत्तम ! ।
तथापि ते मनो राम ! कठिनं परिलक्ष्यते ॥ १२ ॥

जैमिनिरुवाच

भरतेनेदृशैर्वाक्यैः प्रोक्तो रामोऽब्रवीद्वचः ।
सत्यमुक्तं त्वया भ्रातः ! शुद्धा जनकनन्दनी ॥ १३ ॥

लोकापवादो दुर्वारो राज्ञां कीर्तिविनाशनः ।
कीर्तिहीनं जन्म येषां जीवन्तोऽपि मृता हि ते ॥ १४ ॥

पुरूरवा हरिश्चन्द्रो नहुषो वैन्य एव च ।
वरिष्ठा नृपमुख्यास्ते गीयन्ते यशसा भुवि ॥ १५ ॥

मान्धाता सगरश्चैव ह्यम्बरीषो भगीरथः ।
ऋतुपर्णो नलश्चैव ये चान्ये पुण्यकीर्त्तयः ॥ १६ ॥

ख्यातिं प्राप्ता हि राजानः सत्कीर्त्यैव रघूद्वह ! ।
न कीर्तिसदृशं किञ्चिन्नराणामिह विद्यते ॥ १७ ॥

पापत्राणं पुण्यदञ्च स्वर्गादिप्राप्तिकारकम् ।
अपकीर्तिस्तु यस्यैव गीयते मानवैर्भुवि ॥ १८ ॥

तस्य जन्म वृथा मन्ये जीवितं च निरर्थकम् ।
मुहूर्तमपि जीवेत नरः शुद्धेन कर्मणा ॥ १९ ॥

युगान्तमपि नैवेह नरः कीर्तिं विना क्वचित् ।
किन्न जीवन्ति हि चिरं काकोलूकादिपक्षिणः ॥ २० ॥

तथा तज्जीवितं मन्ये नृणां कीर्तिविवर्जितम् ।
यैः पुत्रैर्बन्धुभिर्दारैः पुंसामपयशो भवेत् ॥ २१ ॥

त्याज्याः पुत्रा बान्धवाश्च दाराः प्राणप्रिया अपि ।
श्रूयते हि पुरा राज्ञा शिबिना सत्यवादिना ॥ २२ ॥

कीर्त्यर्थं हि स्वदेहस्य दत्तं मांसं हि विष्णवे ।
तथैव कवचं कर्णो वासवाय ददौ पुरा ॥ २३ ॥

जीवनं वैनतेयाय ददौ जीमूतवाहनः ।
ददौ दधीचिरस्थीनि कीर्त्यर्थं कीर्तिकृदृषिः ॥ २४ ॥

तस्मादिमां परित्यक्ष्ये जीर्णां त्वचमिवोरगः ।
जीविते मम चेदिच्छा तव कैकेयिनन्दन ! ॥ २५ ॥

पुनस्त्वया न वक्तव्यं तर्हीदं वचनं मयि ।
तावत्स लक्ष्मणः क्रुद्धो धुन्वन् हस्तावथाब्रवीत् ॥ २६ ॥

निष्पिष्य पाणिना पाणिं निःश्वसन्नुरगो यथा ।
विसृजंश्च स्वनेत्राभ्यां कवोष्णं वारि दुःखजम् ॥ २७ ॥

लक्ष्मण उवाच—

आः किं लोकापवादे त्याज्या सीता रघूद्वह ! ।
भार्याकलहतः कश्चिन्मातरं त्यक्तुमर्हति ॥ २८ ॥

तथा त्वं सर्वलोकस्य जननीं हातुमिच्छसि ।
पापिनस्तान् हनिष्यामि ये सीतां दूषयन्ति हि ॥ २९ ॥

म्लेच्छपूज्यैरधर्मुण्डैर्यवनैर्दूष्यते श्रुतिः ।
सा किं त्याज्या द्विजवरैरिति राम ! विचारय ॥ ३० ॥

शत्रुघ्नः कुपितस्तावद्राघवं प्रत्यवोचत ।

शत्रुघ्न उवाच—

राम ! त्वं यद्वचो ब्रूषे त्यक्ष्ये प्राणानहं यथा ।
त्वया ये त्याजिताः प्राणास्तेऽपरत्वं प्रपेदिरे ॥ ३१ ॥

यदि त्वं हास्यसि प्राणानमरस्त्वं भविष्यसि ।
तथा ये त्वां समाश्रित्य वर्तेयुः पापयोनयः ॥ ३२ ॥

निर्दुःखा नीरुजास्ते स्युः किं पुनर्जनकात्मजा ।
अथवा त्वां मृतं सीता जीवयेत् पतिलालसा ॥ ३३ ॥

त्वं च तां मृगशावाक्षीं मृतां जीवयसे कथम् ।
शत्रुघ्नस्य वचः श्रुत्वाऽवोचद्रामः शनैः शनैः ॥ ३४ ॥

राम उवाच—

आत्मानमप्यहं जह्यां युष्मांश्च पुरुषर्षभ ! ।
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ॥ ३५ ॥

जैमिनिरुवाच—

रामे ब्रुवति राजेन्द्र ! सीतां त्यक्तुं कृतोद्यमे ।
ततो भरतशत्रुघ्नौ गृहं स्वं स्वमगच्छताम् ॥ ३६ ॥

लक्ष्मणो न ययौ रामं त्यक्त्वा दुःखाटवीगतम् ।
लक्ष्मणं केवलं दृष्ट्वा रामो वाक्यमथाब्रवीत् ॥ ३७ ॥

सौमित्रे ! छिन्धि खड्गेन शिरो मे, न विचारय ।
सीतां भागीरथीतीरे त्यक्तुं वा गच्छ मा चिरम् ॥ ३८ ॥

सीतापरित्यागभवो दोषो मम, तवास्तु न ।
नौमि ते चरणौ भ्रातः, सीतां मुञ्च सरित्तटे ॥ ३९ ॥

रामेणोक्तो लक्ष्मणस्तु लज्जयावनतः श्वसन् ।
संशयाक्रान्तचित्तः सन् चिन्तयामास चेतसि ॥ ४० ॥

श्रूयते धर्मशास्त्रेषु गुरोराज्ञा गरीयसी ।
पुरा परशुरामेण स्वपितुर्वचनात्तथा ॥ ४१ ॥

परश्वधेन वै छिन्नमाशु स्वजननीशिरः ।
मनसा निश्चयं कृत्वा कर्तुं रामवचो नृप ! ॥ ४२ ॥

यन्तारमब्रवीद् वीरो रथमानय साश्वकम् ।
तेनानीतं रथवरं समारुह्य जगाम सः ॥ ४३ ॥

सीताभवनमुद्दिश्य ततोऽश्वा न्यपतन् भुवि ।
अथ यन्त्रा कशाघातैस्ताडितास्ते ययुः शनैः ॥ ४४ ॥

संप्राप्य सीताभवनं लक्ष्मणोऽवतरद्रथात् ।
प्रविश्य भवनं सीतां नमश्चक्रेऽप्यवाङ्मुखः ॥ ४५ ॥
सीतैवंविधमालोक्य लक्ष्मणं वाक्यमब्रवीत् ।

सीतोवाच—

मनोरथप्रदो भर्त्ता मम राजीवलोचनः ॥ ४६ ॥
मया हसन्त्या यद्रात्रौ याचितं तद्ददौ रघुः ।
दत्तेऽपि निष्फलं देव यावत्त्वं नैव दृश्यसे ॥ ४७ ॥
अधुना तद्रघोर्वाक्यं सत्यं कर्तुं त्वमागतः ।
ग्रहीष्यामि विचित्राणि वासांस्यगुरुचन्दनम् ॥ ४८ ॥
मुनिभ्यो मुनिपत्नीभ्यो दातुं श्रेयोऽभिवृद्धये ।
तत्तस्या वचनं श्रुत्वा लक्ष्मणो हृदि विव्यथे ॥ ४९ ॥
मुञ्चन्नश्रूणि शनकैरेवं कुर्विति सोऽब्रवीत् ।
भ्रातुर्वचनपाशेन बद्धः परवशस्तदा ॥ ५० ॥

जैमिनिरुवाच—

ततः सीतादुकूलानि निदधौ स्यन्दनोपरि ।
अजिनानि विचित्राणि खाद्यानि विविधानि च ॥ ५१ ॥
पादुके रामचन्द्रस्य सौवर्णे मणिचित्रिते ।
एवं संस्थाप्य वस्तूनि श्वश्रूं प्रष्टुमथो ययौ ॥ ५२ ॥
कौसल्यां रामजननीं सीता नत्वेदमब्रवीत् ।
दोहदो मम संजातो रन्तुं भागीरथीतटे ॥ ५३ ॥

तं च पूरयितुं प्राप्तो लक्ष्मणो मम देवरः ।
अनुज्ञा युष्मदीया चेत्ततो गच्छामि तद्वनम् ॥ ५४ ॥

सीतावचनमाकर्ण्य कौसल्या प्राह जानकीम् ।

कौसल्योवाच—

सीते कथं वनं यासि वृक्षकण्टकसंयुतम् ।
वराहव्याघ्रसिंहादिसत्त्वैर्व्याप्तं भयंकरम् ॥ ५५ ॥
शीतोष्णवातवर्षादिदुःखदं त्वमनिन्दिते ।
चिरात्प्राप्तं राज्यसुखं परित्यज्य शुचिस्मिते ॥ ५६ ॥
कठोरहृदयैः सेव्यं वनं गन्तुमिहेच्छसि ।
त्वं तु रामं परित्यज्य वनं गन्तुं न चार्हसि ॥ ५७ ॥
मुखं प्रभाते मलिनं तवोष्ठौ शुष्यतः श्रमात् ।

सीतोवाच—

मद्भर्त्ता वनवासी च सदा कण्टकमर्दनः ॥ ५८ ॥
निर्मलो जीवयेद्यस्तु वानरान्कोटिशो रणे ।
तं स्मरन्तीं तादृशीं मां दुःखदं न वनं भवेत् ॥ ५९ ॥
रामनाम जपन्त्याश्च ममोष्ठौ शुष्यतः कथम् ।
मनोवाक्कर्मभिः सेवा युष्मदीया कृता मया ॥ ६० ॥
ततो मम वने नार्तिर्भविष्यति च नौमि वः ।
इति प्रदक्षिणीकृत्य श्वश्रूं सीताभिनन्दिता ॥ ६१ ॥

कैकेयीं च सुमित्रां च नत्वा पृष्ट्वा जगाम सा ।
यत्रासौ लक्ष्मणः शूरो रथमादाय तस्थिवान् ॥ ६२ ॥
आरुरोह रथं सीता हर्षनिर्भरमानसा ।
स गद्गदितकण्ठोऽसौ सौमित्रिः प्राह सारथिम् ॥ ६३ ॥
चोदयाश्वान्कशाघातैर्यथा शीघ्रं प्रयान्ति हि ।

जैमिनिरुवाच—

तस्य तद्वचनं श्रुत्वोवाच सूतोऽथ लक्ष्मणम् ॥ ६४ ॥
अहमश्वमनो वेद्मि यथावत् पुरुषर्षभ ! ।
चलाचलप्रोथतया वक्तुकामा इमे हयाः ॥ ६५ ॥
शीघ्रं हि यदि गच्छेम ततो नश्वरणैर्मही ।
दूयेत सीतादुःखेन दुःखिताऽद्रौ विशेषतः ॥ ६६ ॥
संग्रामे नो गतिः श्लाघ्या नेदृशे कुत्सिते पथि ।
इत्येवं हृदि मन्यन्ते वाजिनो भरतानुज ! ।
तथाऽपि प्रेरयाम्यद्य पश्य मे हस्तलाघवम् ॥ ६७ ॥
इत्येवमुक्त्वा वचनं स सारथिः
पाण्योस्तलेनाभिजघान कन्धराम् ।
रश्मीन् समादाय कशामुदीरयन्
प्राचोदयत्तीव्ररयान्हयांस्तदा ॥ ६८ ॥

इति कुशलवोपाख्याने
लक्ष्मणप्रस्थानं नाम
द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

जैमिनिरुवाच—

गच्छन्तीं तां समालोक्य सीतां पद्मनिभाननाम् ।
अयोध्याऽतीव दुःखेन व्यथिता वातचञ्चलैः ॥ १ ॥

ध्वजानां पल्लवैरेनां वारयन्तीव दृश्यते ।
ततस्तेन रथेनासौ गच्छन्ती जानकी पथि ॥ २ ॥

ददर्श दुर्निमित्तानि घोराणि सुबहून्यपि ।
शिवा संमुखमागत्य व्यरावीद्भैरवं यथा ॥ ३ ॥

हरिणा मार्गमुल्लङ्घ्य प्रधावन्ति स्म सर्वशः ।
स्फुरति स्म ततो नेत्रं दक्षिणं पुरुषर्षभ ! ॥ ४ ॥

जैमिनिरुवाच—

ततस्तु विपरीतानि दुश्चिह्नानि विलोक्य सा ।
विस्मिता जानकी वीरं लक्ष्मणं प्रत्यवोचत ॥ ५ ॥

पश्य लक्ष्मण चिह्नानि शिवा गोमायवो मृगाः ।
मार्गमावृत्य तिष्ठन्ति रुदन्ति भयसूचकाः ॥ ६ ॥

परं स्वस्त्यस्तु रामाय कौसल्याहर्षकारिणे ।
तस्य बाह्वोर्बलम्भूयादायुष्यं परिवर्धताम् ॥ ७ ॥

येन रामेण घोराणि रक्षोवृंदानि भूतले ।
पातितानि शरैस्तीक्ष्णैः शुभं तस्यास्तु सर्वदा ॥ ८ ॥

खरश्च दूषणो येन त्रिशिरा यमसादनम् ।
प्रापिता वै जनस्थाने स राज्यं कुरुतां ध्रुवं ॥ ९ ॥

अगाधो गाधतां नीतो वानरैर्येन सागरः ।
विभीषणो भयात्त्रातः सोऽस्त्वयोध्यापतिः सुखो ॥ १० ॥

महाबलौ रावणकुम्भकर्णौ
लङ्कापती तौ प्रथितौ पृथिव्यां ।
पापस्य साक्षादिव मूर्तिभाजौ
भिन्नौ रणे येन शरैः सुतीक्ष्णैः ॥ ११ ॥

मन्दोदरीनेत्रजलैश्च लङ्का-
मभ्युक्ष्य वीरं हरिसूनुमग्रे ।
यः प्रेरयामास मदर्थमेव
स राघवो विश्वसुखप्रदोऽस्तु ॥ १२ ॥

एवं वदन्ती जनकात्मजाऽसौ ।
प्रायात् त्रिमार्गां जनपापहन्त्रीम् ।
कल्लोलजालं गगने वितन्वतीं
पयोऽति गौरं दधतीं पवित्रं ॥ १३ ॥

जम्ब्वाम्रचम्पककुलिन्दपटाश्म सार
खर्जूरपूगकदलीपनसाढ्यतीरां ।
द्राक्षाफलस्तवकशोभितमण्डपालीं
सौवर्णकेतकवनावलिमुद्वहन्तीम् ॥ १४ ॥

तां देवलोकतटिनीं प्रसमीक्ष्य सीता
हृष्टा वभूव सफलं मम जन्म चैतत् ।
रामस्य कीर्तिमिव शुभ्रतमां प्रवाहैः
पापानि सर्वजगतः खलु नाशयन्तीम् ॥ १५ ॥

जैमिनिरुवाच—

लक्ष्मणस्तु रथात्तस्मादवतीर्य यथा भुवं ।
नावं नाविक संयुक्तामारुरोह तया सह ॥ १६ ॥
गङ्गायास्तटमासाद्य परं भयविवर्धनम् ।
अवातरत्ततः सीता नावो लक्ष्मण एव च ॥ १७ ॥
सौमित्रिर्जानकी चापि सस्नतुर्जाह्नवीजले ।
परिधाय ततो वस्त्रे जग्मतुर्वनगह्वरम् ॥ १८ ॥
यस्मिन्धवाश्च खदिरा धात्र्यो वदरिकास्तथा ।
बकुलाः पिप्पलाः शुष्काः कोटरैश्चोपलक्षिताः ॥ १९ ॥
कुशानांकण्टकास्तीक्ष्णास्तथा गोक्षुरकादयः ।
निम्बाश्च बहवः सन्ति क्रूराः पक्षिगणास्तथा ॥ २० ॥
जीर्णवोधिद्रुमस्थाश्च काकाः क्रेङ्कारकारिणः ।
तेषां कोटरमध्यस्थाः सर्पाः फूत्कारकारिणः ॥ २१ ॥
चित्तकारण्यमहिषाः सूकराः स्थूलदंष्ट्रिणः ।
कृष्णाङ्गा ऊर्ध्वपुच्छाश्च वृश्चिका बहवस्तथा ॥ २२ ॥
व्याघ्रा मृगगणं धर्तुं निश्चला योगिनो यथा ।
बिडाला मूषकविलं समाश्रित्य खनन्ति वै ॥ २३ ॥

तथाविधं वनं दृष्ट्वा सीता रोमाञ्चिता बभौ ।
यथा रामस्य कीर्तिस्त्री कंटकैः परिवेष्टिता ॥ २४ ॥
सौमित्रिमब्रवीद्भीता दुर्निमित्तानि पश्यती ।

सीतोवाच--

सौमित्रे ! न च पश्यामि मुनीनामाश्रमानहम् ।
पवित्रवेषास्ताः साध्वीर्न पश्यामि तपस्विनीः ॥ २५ ॥
मौञ्जीकृष्णाजिनभृतो द्वादशाब्दाञ्छिखाभृतः ।
ऋषिपुत्रान्न पश्यामि मुनीन् वल्कलवाससः ॥ २६ ॥
नाग्निहोत्रोत्थितो धूमो दृश्यते भरतानुज ! ।
सर्वतो दृश्यते चायं दावः काष्ठतृणं दहन् ॥ २७ ॥
न वेदध्वनिरत्रास्ति श्रूयते पक्षिणां रुतम् ।
कथं वेदध्वनिः श्राव्यस्त्यजन्त्या रघुनन्दनम् ॥ २८ ॥
मयाऽसौ रघुनाथश्च त्यक्तो बुद्ध्या ततो न हि ।
दृश्यते मुनिपत्न्यस्ता मुनिपुत्रा मुनीश्वराः ॥ २९ ॥
पवित्रैरेव दृश्यन्ते पवित्राश्रमवासिनः ।
मया रामपराङ्मुख्या पवित्राणि कुरूपया ॥ ३० ॥
कथं तान्यग्निहोत्राणि दृश्यन्ते वनवासिनाम् ।

जैमिनिरुवाच—

वचांसि तानि सौमित्रिः शृण्वन्नश्रूण्यमुञ्चत ॥ ३१ ॥
अधः पश्यन्नुवाचासौ लक्ष्मणो विह्वलो बहु ।

लक्ष्मण उवाच—

सीते ! स आश्रमो दूरे गम्यतां वै शनैः शनैः ॥ ३२ ॥
रामेण त्वं परित्यक्ता सत्यं लोकापवादतः ।
तवापि दोहदो जातो द्रष्टुं भागीरथीं नदीम् ॥ ३३ ॥
मामसौ प्रेरयामास त्वां हातुं गहने वने ।
किं करोम्यवशो मातर्भ्रातुस्तस्य वचोहरः ॥ ३४ ॥
इति तस्य वचः श्रुत्वा पपात धरणीतले ।
मूर्च्छिता जानकी तस्मिन्नम्बराद्रोहिणी यथा ॥ ३५ ॥
छिन्नमूला यथा वल्ली गृष्टिः शूलाभिपीडिता ।
कुमारी सर्पदष्टेव तद्वत् सा भूतलेऽपतत् ॥ ३६ ॥
ततस्तां लक्ष्मणस्त्रस्तो वस्त्रान्तेनाभ्यवीजयत् ।
हस्तेनैकेन चच्छायां कुर्वंश्च मुखपङ्कजे ॥ ३७ ॥
उवाच यदि रामस्य साक्षात्सेवा कृता मया ।
तर्हीयं जानकी शीघ्रं समुत्तिष्ठतु तादृशी ॥ ३८ ॥
इत्येवं वदतस्तस्य चेतनां लभते स्म सा ।
नेत्रे समुन्मिलन्ती वै लक्ष्मणं ददृशे पुरः ॥ ३९ ॥
अवोचत शनैरेव मां त्यक्त्वा गहने वने ।
कथं यास्यसि सौमित्रे जनस्थाने यथा पुरा ॥ ४० ॥
देवराणां देवरस्त्वं मम पूज्यतमो मतः ।
त्वयाऽहं दण्डके त्राता विराधाङ्कगता पुरा ॥ ४१ ॥

फलमूलाम्बुभिः शुद्धैः परिचर्या कृता त्वया ।
पर्णशाला विचित्रास्ता मदर्थमुपकल्पिताः ॥ ४२ ॥

इदानीं त्वदृते तास्ताः कः करिष्यति लक्ष्मण ! ।
अग्रतः पाति रामो मां पृष्ठतस्तु भवान् वने ॥ ४३ ॥

हा दुःखं तु मया प्राप्तं रामो मां विजहौ यतः ।
अपराधादृते वीरो राजा राजीवलोचनः ॥ ४४ ॥

मनसा कर्मणा वाचा नापराध्यामि तं पतिम् ।
सदा तच्चरणौ चित्ते चिन्तयामि मनोरमौ ॥ ४५ ॥

मुखं पद्मविशालाक्षं निर्मलं चन्द्रबिम्बवत् ।
चारुदंष्ट्रं श्मश्रुलञ्च कुण्डलाभ्यां सुशोभितम् ॥ ४६ ॥

मुक्तामाणिक्ययुक्तेन किरीटेनोपलक्षितम् ।
द्रक्ष्यामि रामस्य कथं पतिता गहने वने ॥ ४७ ॥

काकपक्षधरः पूर्वं रामः कौशिकसंयुतः ।
आगतो मिथिलां पूर्णस्त्वया सह महामते ! ॥ ४८ ॥

त्रैयम्बकं द्विधा चक्रे परिणेतुं च मां धनुः ।
मदर्थे वानरैः सार्द्धं सख्यं यो व्यदधाद्रघुः ॥ ४९ ॥

मद्वियोगे सति पुरा वृक्षानालिङ्गति स्म यः ।
स रामो व्यजहात्सीतां दैवमेव हि कारणम् ॥ ५० ॥

न दोषस्तस्य रामस्य ममायमिति चिन्तये ।
अथवा प्राक्तनानां हि विपाको मम कर्मणाम् ॥ ५१ ।

लक्ष्मण ! त्वं महाबाहो ! निर्दोषश्चैव राघव: ।
अयोध्यां गच्छ शीघ्रं त्वं यतो हि परवानसि ॥ ५२ ॥

यो गर्भे रक्षिता देवो यो वै लङ्काधिवासिनीम् ।
मां स वै रक्षिता चाद्य न दु:खं कर्तुमर्हसि ॥ ५३ ॥

लक्ष्मण ! त्वं महाबाहो ! श्वश्रून् विज्ञापनं कुरु ।
युष्माकं चरणौ नित्यं चिन्तयामि वनेचरा ॥ ५४ ॥

ससत्वाहं वने त्यक्ता रामेणापि विजानता ।
इत्येवं विलपन्ती सा जानकी गहने वने ॥ ५५ ॥

पुनरेव शुभाचारा लक्ष्मणं वाक्यमब्रवीत् ।

सीतोवाच—

व्यापारेऽस्मिन्कथं रामस्त्वां कृपालुमयोजयत् ॥ ५६ ॥

प्रेरणीय: स सुग्रीव: कठिनो भ्रातृघातक: ।
विभीषणो वा बलवान्रावणद्रोहकारक: ॥ ५७ ॥

यो यत्र विषये दक्ष: स तत्र विनियोज्यते ।
वृथा त्वां प्रेरयामास त्यागे मम रघूद्वह: ॥ ५८ ॥

गच्छ लक्ष्मण ! भद्रं ते स्वां पुरीं रामपालिताम् ।
मार्गे क्षेमं भवतु ते भ्राता न कुप्यते रघु: ॥ ५९ ॥

इति तस्या वच:श्रुत्वा सौमित्रिर्दु:खितो भृशम् ।
प्रदक्षिणीकृत्य तदा नमश्चक्रेऽप्यवाङ्मुख: ॥ ६० ॥

गच्छन्नुवाच सौमित्रिस्त्वां मात: ! वनदेवता: ।

रक्षन्तु विपिने चास्मिन्नेष गच्छामि तद्वशः ॥ ६१ ॥
निर्ययौ लक्ष्मणो वीरः पश्यंस्तां जनकात्मजाम् ।
पादौ न चलतस्तस्य कृच्छ्रेण महता ययौ ।
पश्यती जानकी मूर्ति लक्ष्मणस्यापि निश्चला ॥ ६२ ॥
न ददर्श यदा तं तु निपपात धरातले ।
मूर्छिता जानकी तत्र मुहूर्तं समावर्तिष्ठुति ॥ ६३ ॥
अथैत्य वीरः सौमित्रिस्तीर्त्वा भागीरथीं ययौ ।
एकाकिनी वने बाला विललाप मृगी यथा ॥ ६४ ॥
हा पापं किं मया चीर्णं यत्त्यक्ता गहने वने ।
जनकस्य कुले जाता दत्ताऽस्मै रघवे पुरा ॥ ६५ ॥
दिशोऽवलोकयामास शून्याश्च विदिशस्तथा ।
आगमिष्यति चैवायं लक्ष्मणोऽपि हसेच्च किम् ॥ ६६ ॥
पुनर्मूर्छामवाप्यासौ जानकी भयविह्वला ।
तद्दुःखदुःखिता हंसा रुदन्ति क्रूरनिस्वनम् ॥ ६७ ॥
मृणालानि परित्यज्य तदद्भुतमिवाभवत् ।
तृणाङ्कुरं विहायाशु सीतां पश्यन्ति तादृशीम् ॥ ६८ ॥
एणशावा हरिण्यश्च कृष्णसारा विशेषतः ।
मयूरा नृत्यमुत्सृज्य तस्मिन्काले प्रधाविताः ॥ ६९ ॥
शकुन्ता विजहुर्भक्षं छायां पक्षैः स्म कुर्वते ।
जलस्थाः पक्षिणश्चाभिसिषिचुर्जनकात्मजाम् ॥ ७० ॥

चमर्यः पुच्छचमरैर्वीजयन्ति स्म जानकीम् ॥ ७१ ॥
अथ भागीरथीतीरे स्नातः पुष्पाण्युपाहरन् ।
अर्चयामास पवनः सीतां सौगन्ध्यसंयुतः ।
तदा स्थिता विशालाक्षी रामरामेति भाषिणी ॥ ७२ ॥
विचेष्टन्ती मुक्तकेशा भूमौ पांसुभिरावृता ।
यदि प्राणानिमान्हास्ये भ्रूणहत्या भविष्यति ॥ ७३ ॥
किं करोमि क्व गच्छामि को मे त्राता भविष्यति ।
इतस्ततो धावमाना स्खलन्ती च पदे पदे ।
कुशानां कण्टकास्तीक्ष्णाः पादयोराचरन्व्यथाम् ॥ ७४ ॥
सुस्रुवे रुधिरं पद्भ्यां वैदेह्या भरतर्षभ ! ।
एवं दुःखातुरा बाला वर्तते स्म तदा वने ॥ ७५ ॥
तावत्स धीमान्बहुभिः समावृतो
वाल्मीकिरुग्रैश्च तपोभिरीडितः ।
यूपानथ च्छेदयितुं मखार्थं
समागतस्तां ददृशे विषण्णाम् ॥ ७६ ॥

इति कुशलवोपाख्याने
वाल्मीकिसमागमो नाम
तृतीयोऽध्यायः

---

# चतुर्थोऽध्यायः

जैमिनिरुवाच—

वाल्मीकिस्तां ततो दृष्ट्वा विषण्णां दीनचेतसां ।
तपःसिद्धिमिव क्लिन्नां स्वकीयामनवेक्षणात् ॥ १ ॥

उवाच का त्वं कल्याणि ! पुत्री कस्य परिग्रहः ।
कस्मादस्मिन्वने शून्ये तिष्ठसे विस्तराद्वद ॥ २ ॥
ततः सीता नमस्कृत्य प्रोवाचातीव दुःखिता ।
सुता वै जनकस्याहं स्नुषा दशरथस्य च ॥ ३ ॥
रामस्य भार्या भूदेव ! सदापतिपरायणा ।
त्यक्ताऽस्मि तेन रामेण न जाने केन हेतुना ॥ ४ ॥
वाल्मीकिस्तां समाश्वास्य प्रोवाच वचनं शुभम् ।

वाल्मीकिरुवाच—

सीते ! लभस्व पुत्रौ द्वौ मा शोकं कुरु सुव्रते ! ।
वाल्मीकिरिति नामाहं मुनिर्जनकपूजितः ॥ ५ ॥
प्राप्ताश्रमं मे रुचिरं पत्रपुष्पफलावृतम् ।
पर्णशालां विधास्यामि त्वदर्थं वरवर्णिनि ! ॥ ६ ॥
यत्र प्रसूतिर्भविता रुचिरा तव जानकि ! ।
मुनेस्तद्वचनं श्रुत्वा हर्षिता जनकात्मजा ॥ ७ ॥
निदाघार्ता मयूरीव श्रुत्वा वै घननिस्वनम् ।
बाढमित्येवमुक्त्वा सा प्रययौ पृष्ठतो मुनेः ॥ ८ ॥

तया सह महाभागो वाल्मीकिः प्राप चाश्रमम् ।
यस्मिन्व्याघ्राश्च सिंहाश्च गोभिः क्रीडन्ति हर्षिताः ॥ ९ ॥
बिडालास्येषु लीयन्ते मूषकाः स्वबिले यथा ।
नकुला उरगाश्चैव मयूरा यत्र रेमिरे ॥ १० ॥
रमते स्म मृगैः सार्धं चिल्लकास्त्यक्तमत्सराः ।
सरसीषु विचित्रासु बको मत्स्यान्न हन्ति हि ॥ ११ ॥
सा चैनमाश्रमं दृष्ट्वा वाल्मिकेस्तांस्तपोधनान् ।
ऋषिभार्याः शुभाचारा ऋषिपुत्रांश्च शोभनान् ॥ १२ ॥
हर्षेण महताविष्टा नमश्चक्रे पुनः पुनः ।
ताभिस्तैश्च प्रयुक्ताशीर्जानकी शुभलक्षणा ।
कल्पितां मुनिपुत्रैश्च पर्णशालामुपाविशत् ॥ १३ ॥
दत्तानि मुनिपत्नीभिः फलानि बुभुजे पयः ॥ १४ ॥
पीत्वा सुनिर्मलं तस्या शालायां सा स्म तिष्ठति ।
नौति स्म चरणौ नित्यं वाल्मीकेः शृणुते कथाः ॥ १५ ॥
एवं तस्मिन्वसंत्याश्च सीताया ह्यगमन्नव ।
मासा गर्भस्य वाल्मीकेराश्रमे फलितद्रुमे ॥ १६ ॥
अतीते नवमे मासे जानकी सुषुवे यमौ ॥ १७ ॥
निशीथे सुमुहूर्ते च मुनिपत्न्यो विचक्षणाः ।
तत्रत्यमुपचारं तु कलयामासुरागताः ।
गायन्ति गीतं हर्षेण सीतेयं सुषुवे यमौ ॥ १८ ॥

अनयोः प्रभया वेश्म दीप्तमासीत् समन्ततः ।
दिशस्तु विमला जाता ववौ वातोऽतिसौरभः ॥ १९ ॥

प्रदक्षिणार्चिस्तत्रासौ व्यशोभत हुताशनः ।
ततः शिष्याः प्रधावन्ति वाल्मीकिं प्रति शंसितुम् ॥ २० ॥

असूत पुत्रौ भो ब्रह्मन्! जानकी विस्मयो महान् ।
ततो मुनिः कुशाग्र्याँल्लवान्मुष्टिमितान्दधन् ॥ २१ ॥

आगतो यत्र तौ बालौ दृष्ट्वा हर्षसमन्वितः ।
तावभ्यषिञ्चद्दर्भैश्च लवैः सार्धं मुनिस्तदा ॥ २२ ॥

तन्नामानौ मुनिश्चक्रे कुशो लव इति स्वयम् ।
दिने दिने वर्धमानौ चन्द्रसूर्याविवोदितौ ॥ २३ ॥

जातकर्मादिकं सर्वं चक्रे स ऋषिसत्तमः ।
द्वादशाब्दे ततो मौञ्जीबन्धनं व्यदधात्तयोः ॥ २४ ॥

प्रार्थयित्वा कामधेनुं वसिष्ठान् मुनिपुङ्गवः ।
वाल्मीकिर्भोजयामास ब्राह्मणान् वनवासिनः ॥ २५ ॥

कामधेनोः सकाशाद्धि भक्तः प्रादुरभूच्छुभः ।
सूपं विचित्रं मुद्गानां शाकाश्च विविधा अपि ॥ २६ ॥

चन्द्रबिम्बसमा जाताः पूपाः शतसहस्रशः ।
पूरिका घृतपक्वाश्च शतछिद्रा उदुम्बराः ॥ २७ ॥

फलान्यमृतकल्पानि प्रादुर्भूतानि धेनुतः ।
करञ्जिका मोदकाश्च तथा वै सूत्रकोद्भवाः ॥ २८ ॥

निस्तुषाणां तिलानां च नारिकेलसमुद्भवाः ।
चारबीजोद्भवा वृक्षनिर्यासकृतबन्धनाः ॥ २९ ॥
फेणिकाश्चन्द्रबिम्बाभाः सहस्रपुटसंयुताः ।
पर्पटा माषसंभूतास्तथातण्डुलचूर्णजाः ॥ ३० ॥
एवंविधानि चान्नानि पक्वान्नानि ददाति गौः ।
तेन चान्नेन वाल्मीकिस्तर्पयामास ताञ्जनान् ॥ ३१ ॥
ततः कृतोपनयनावागतौ द्वौ कुमारकौ ।
अध्येषातां शिशू वेदं साङ्गं वाल्मीकिनोदितम् ॥ ३२ ॥
तस्माद्रामचरित्रं तत् जगतुर्मधुरस्वनौ ।
लवस्तालधरश्चासीद्वीणाहस्तः कुशो जगौ ॥ ३३ ॥
आलापैर्गगनं सर्वं व्याप्नुवञ्छृण्वतां मनः ।
ततस्ते मुनयो हृष्टाः साधु साध्विति चाब्रुवन् ॥ ३४ ॥
धनुषी प्रददौ धीमान्वाल्मीकिः सगुणे दृढे ।
इषुधी चाक्षयौ रैभ्यस्ताभ्यां तस्य मुनेः सखा ॥ ३५ ॥
तपोधनास्ततः सर्वे अस्त्रग्रामं तयोर्ददुः ।
तपोबलेन ते सर्वे मुनयः प्रददुः शरान् ॥ ३६ ॥
किरीटकवचान्येके ददुः खड्गौ च चर्मणी ।
एवं धनुर्धरौ वीरौ तनुत्राणभृतौ यमौ ॥ ३७ ॥
काकपक्षधरौ तस्मिन्नाश्रमे चरतः स्म तौ ।
सीतां शुश्रूषमाणौ तौ कन्दमूलफलैः शुभैः ॥ ३८ ॥

पादसंवाहनैश्चापि परां प्रीतिं वितेनतुः ।

जैमिनिरुवाच—

अयोध्यायां महाबाहुः पालयन् रघुवंशजः ॥ ३९ ॥
न शर्म लेभे रामोऽसौ ब्रह्महत्याभिपीडितः ।

अश्वमेधक्रतुवरं कर्तुकामोऽप्यभूद् रघुः ॥ ४० ॥
वसिष्ठं च समाहूय विश्वामित्रं च गालवम् ।

वामदेवं स जाबालिमिदं वचनमब्रवीत् ॥ ४१ ॥

राम उवाच—

अश्वमेधं करिष्यामि कथ्यतां तस्य वै विधिः ।

अश्वश्च कीदृशो भाव्यो दानं कीदृग्विधीयते ।
किं मया चरणीयं स्याद् व्रतं तच्च निरूप्यताम् ॥ ४२ ॥

ततो वसिष्ठः कथयाम्बभूव
दुःखेन साध्यः किल यज्ञ एषः ।
अश्वश्च भाव्यः कुमुदेन्दुवर्णः
पीतश्च पुच्छे मलिनश्च कर्णे ॥ ४३ ॥
स रक्षणीयोऽब्दमलं नृवीरै-
र्धृतः परैश्चापि विमोक्षणीयः ।
आरम्भ एवास्य हि विप्रवर्याः
पूज्याः सहस्रं श्रुतिपारगाश्च ॥ ४४ ॥

एको रथो वारण एक एव
दशाश्वमुख्याश्च सुवर्णभारः ।
शतं गवां हेमविभूषितानां
प्रस्थश्च देयो वरमौक्तिकानाम् ॥ ४५ ॥

एकैकशो भृत्यचतुष्टयं च
कार्येषु दक्षं किल देयमत्र ॥ ४६ ॥

असिपत्रव्रतं राम ! कथं त्वं न विधास्यसि ।
यज्ञकर्मणि वै भार्या द्वितीया सहधर्मिणी ।
तया विरहितं राम ! विफलं परिकथ्यते ॥ ४७ ॥

राम उवाच—

सौवर्णी प्रतिमा कार्या जानकीसदृशी प्रभो ! ।
तादृश्या सीतया सार्धं करिष्ये व्रतमुत्तमम् ॥ ४८ ॥

अश्वमेधसमारम्भः क्रियतां मुनिपुङ्गवैः ।
अश्वशालासु रुचिरं शास्त्रोक्तैर्लक्षणैर्युतम् ॥ ४९ ॥

निरीक्ष्य वाजिनं मह्यं ततो दीक्षा प्रदीयताम् ।
तद्भाषितमुपश्रुत्य वसिष्ठो मुनिभिर्वृतः ॥ ५० ॥

वाजिशालासु धवलमश्वमाहारयन्नरैः ।
गोक्षीरवर्णं मुखतः कुङ्कुमाभं सुकेसरम् ॥ ५१ ॥

एकतः श्यामकर्णं तं हयमालोक्य विस्मितः ।
वसिष्ठो ब्राह्मणान्सर्वान्सहस्रं पर्यपूजयत् ॥ ५२ ॥

वस्त्रालङ्करणैर्दिव्यैर्वाजिभिश्च मनोजवैः ।
रथैश्च वारणैर्मत्तैः कलधौततरैः शुभैः ॥ ५३ ॥
दोग्ध्रीभिर्धेनुभिश्चैव पूजयामास तान्द्विजान् ।
ततश्च दीक्षितो रामस्ताद्दश्या सीतया सह ॥ ५४ ॥
हयं तं पूजयामास चन्दनेन सुगन्धिना ।
पुष्पैः स्रग्भिश्च चमरैः शोभितं रघुनन्दनः ॥ ५५ ॥
भाले बद्ध्वा च सौवर्णं पत्रं तस्य हरेः पुनः ।
तस्मिन्पत्रे विलिखितं रामो दशरथात्मजः ॥ ५६ ॥
एकवीराञ्च कौसल्या तस्याः पुत्रो महाबलः ।
तेन मुक्तं हरिवरं गृह्णातु बलवान्नृपः ॥ ५७ ॥
इत्यभिप्रायसहितं पत्रं भाले व्यशोभत ।
शत्रुघ्नं चादिदेशाथ त्वया रक्ष्यस्तुरङ्गमः ॥ ५८ ॥
ततः स तुरगो मुक्तः पृष्ठतो लक्ष्मणानुजः ।
अक्षौहिणीभिस्तिसृभिर्जगाम सहितो बली ॥ ५९ ॥
नाना देशान्व्यतिक्रम्य नगरोपवनानि च ।
लीलया विचचाराशु शत्रुघ्नसहितो हयः ॥ ६० ॥
राजानस्तं हयं दृष्ट्वा नमश्चक्रुः पराङ्मुखाः ।
ये शूरा बलवन्तश्च ते गृह्णन्ति हयोत्तमम् ॥ ६१ ॥
ताञ्जित्वा बलवान्वीरश्शत्रुघ्नोऽमोचयद्धयं ।
ततः स तुरगः प्राप्तो वाल्मीकेराश्रमे शुभे ॥ ६२ ॥

वाल्मीकिर्वरुणाहूतो मखार्थं तलमभ्यगात् ।
आश्रमोपवनं रम्यं प्रविवेश तुरङ्गमः ॥ ६३ ॥

दाडिमाः फलिता यत्र चूताः पल्लविनो नवाः ।
मुनिद्रुमाः पुष्पवन्तो रात्र्यः किं चन्द्रिकाञ्चिताः ॥ ६४ ॥

अनेकाः पुष्पजात्यश्च पुल्लिता देवता इव ।
मृद्वीका मण्डपा रम्या घटयन्त्रैः सुशोभिताः ॥ ६५ ॥

रम्भास्ताः फलिता यत्र स्वर्लोकात्किं समागताः ।
तद्रक्षमाणो वीरोऽसौ धनुष्पाणिर्लवो वली ॥ ६६ ॥

दूर्वाङ्कुरांश्चरन्तं तु वाजिनं ददृशे पुरः ।
ऋषिपुत्रान्समाहूय हयाभ्याशं जगाम सः ॥ ६७ ॥

हरेर्भालगतं पत्रं वाचयामास बालकः ।
एकवीराद्य कौसल्या तस्याः पुत्रो रघूद्वहः ॥ ६८ ॥

तेन रामेण मुक्तोऽसौ वाजीगृह्णात्विमं वली ।
तत्पत्रस्थमभिप्रायं ज्ञात्वा शीघ्रं लवोऽब्रवीत् ॥ ६९ ॥

अस्माकं जननी वन्ध्या त्वेकवीरा न सा किमु ।
इत्येवमुक्त्वा वचनं लवो दध्रे तुरङ्गमम् ॥ ७० ॥

उत्तरीयं समुत्क्षिप्य ववन्ध कदलीतरौ ।
वारयन्ति स्म तं वीरं मुनिपुत्रा भयान्विताः ॥ ७१ ॥

मुनिपुत्रा ऊचुः—

लव ! त्वया रामवाजी वृथाऽयं वध्यते बलात् ।

अस्य ये रक्षकास्ते त्वां नेष्यन्ति त्यज्य नामयम् ॥ ७२ ॥
अनादृत्य वचस्तेषामब्रवीत् कुपितो लवः ।

लव उवाच—

ऋषिस्त्रीकुक्षिजा यूयमहं सीतोदरोद्भवः ॥ ७३ ॥
सीतायाश्चोदरे जातः कपिरेव न संशयः ।
यद्यमुं वाजिनं बद्ध्वा मुञ्चेयं भयशङ्कया ।
परं श्रेयस्तु मरणं न लज्जा मामुपाव्रजेत् ॥ ७४ ॥

इति कुशलवोपाख्याने
तुरगग्रहणोनाम
चतुर्थोऽध्यायः

---

## पञ्चमोऽध्यायः

ततः प्राप्तं महत्सैन्यं रथवाजिसमाकुलम् ।
मत्तद्विरदसंबाधं पत्तिभिश्च समावृतम् ॥ १ ॥

कुतोऽश्वश्च कुतोऽश्वश्च व्याहरन्तो महाबलाः ।
रथिनः शतसाहस्राः प्राप्ताः शत्रुघ्नपालिताः ॥ २ ॥

ददृशुः कदलीवृक्षे बद्धमश्वं महारथाः ।
पप्रच्छुः केन बद्धोऽयं लघूंस्तान्ब्रह्मचारिणः ॥ ३ ॥

तेऽब्रुवन्नाम्रवृक्षस्य मूले तिष्ठति निर्भयः ।
लवश्च नाम्ना विख्यातस्तेनायं विधृतो हयः ॥ ४ ॥

प्रहस्य रथिनस्ते तु प्रोचुर्मूर्खोऽस्ति बालकः ।
बलं हयं पालयन्तो न जानात्येष वै शिशुः ॥ ५ ॥

मुच्यतां मुच्यतां चाश्वो यथा शीघ्रं व्रजेद्धराम् ।
तावत्प्राप्तो महाबाहुर्धनुष्पाणिर्लवो बली ॥ ६ ॥

किमिदं गर्वितैर्वीरैः क्रियते हयमोचनम् ।
मां जित्वा मुच्यतामश्वो मयि तिष्ठति न क्वचित् ॥ ७ ॥

अशृण्वतां वचस्तेषां मोक्तॄणां हयमुत्तमम् ।
चिच्छेद हस्तान्स लवो बलेन निशितैः शरैः ॥ ८ ॥

ते छिन्नहस्ता योद्धारो ब्रुवन्ति स्म निपात्यताम् ।
ततस्तं शरवर्षेण ववृषुस्ते समागताः ॥ ९ ॥

केचिच्छक्तीश्च पाशांश्च चिक्षिपुः शतशो बलात् ।
आपतच्छरसंघातो न पस्पर्श लवं तदा ॥ १० ॥

यथा हि गौतमीतोये स्नातं पापचयो महान् ।
तच्छस्त्रसङ्घं चिच्छेद योगीव भवबन्धनम् ॥ ११ ॥

पञ्चभिः पञ्चभिर्बाणैरेकैकं ह्यताडयत् ।
निषङ्गाभ्यामक्षयाभ्यां गृह्णन्बाणान्मुमोच सः॥ १२ ॥

गजा भिन्ना द्विधा बाणैः शुण्डाश्छिन्ना द्विधा द्विधा।
शिरांस्याधोरणानां च चिच्छेद निशितैः शरैः ॥ १३ ॥

काश्मीरकंबलान्वीरो घण्टाश्चिच्छेद लम्बिताः ।
हस्तिमञ्चान्पताकाश्च व्यलुनात्स लवो बली ॥ १४ ॥

रथान्काञ्चनसन्नाहानच्छिनद्धन्विनां वरः ।
चक्राणि चक्ररक्षांश्च त्रिवेणून् सारथींस्तथा ॥ १५ ॥

अश्वांश्च व्यधमद्बाणैस्तथा वै रथसारथीन् ।
चामराणि ध्वजस्तम्भान् धनूँषि सुदृढानि च ॥ १६ ॥

तूणीरान्निशितैर्बाणैश्चिच्छेद स कुशानुजः ।
अवधीत्तुरगांश्चापि सोऽश्वारोहान् रघूत्तमः ॥ १७ ॥

पदातीन्सायुधान्प्रासांश्चिच्छेद तिलशस्तदा ।
एवं लवो महत्कर्म चक्रे संग्राममूर्द्धनि ॥ १८ ॥

जैमिनिरुवाच—

स दृष्ट्वा निहतं सैन्यं बालकेन पदातिना ।

शत्रुघ्नः कुपितो वीरो रथमारुह्य चागमत् ।
विस्फारयन्धनुः श्रेष्ठं तिष्ठ तिष्ठेति चाब्रवीत् ॥ १९ ॥

एवं वदन्तं शत्रुघ्नं विव्याध दशभिः शरैः ।
श्रयन्माहेश्वरं स्थानं लवो निर्भयमानसः ॥ २० ॥

हृदि चैकेन विव्याध चतुर्भिश्चतुरो हयान् ।
अच्छिनद्ध्वजमेकेन चतुर्भिश्चक्ररक्षकान् ॥ २१ ॥

ततश्चैकेन बाणेन धनुर्ज्यामच्छिनल्लवः ।
आरोपयित्वा शत्रुघ्नो ज्यां द्वितीयां शरासने ॥ २२ ॥

ततो नालीकनाराचांस्तीक्ष्णभल्लान्मुमोच सः ।
त्रिभिर्ललाटे विव्याध लवं तं लक्ष्मणानुजः ॥ २३ ॥

त्रिभिस्तैस्ताडितो बालः प्रहसन्वाक्यमब्रवीत् ।

लव उवाच—

ललाटे मम पुष्पाणि लग्नानि कमलानि किम् ॥ २४ ॥

एतावत्ते बलं वीर समग्रं परिलक्ष्यते ।
इत्येवमुक्त्वा वचनं चतुर्भिश्चतुरो हयान् ॥ २५ ॥

अनयन्निशितैर्बाणैर्यमस्य सदनं महत् ।
सारथेश्च शिरः कायाच्छरेणैकेन चाहरत् ॥ २६ ॥

द्वाभ्यां शराभ्यां चिच्छेद ध्वजं चास्य समुच्छ्रितम् ।
द्विधा चक्रे लवो बाणैः शत्रुघ्नस्य धनुर्दृढम् ॥ २७ ॥

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
शत्रुघ्नः कुपितो वीरो धनुरन्यत् समाददे ॥ २८ ॥

सगुणं धनुरादाय शरं चैकं समाददे ।
पीतवर्णं सुनिशितं गार्ध्रपत्रैरलङ्कृतम् ॥ २९ ॥

ततोऽब्रवीत्स शत्रुघ्नः पलायस्व शिशोऽधुना ।
अन्यथा मरणं ते स्यात्कृपा मां बाधते त्वयि ॥ ३० ॥

तदाकर्ण्य वचस्तस्य कुपितो बलवाँल्लवः ।
चिच्छेद तं शरं दिव्यं स द्विधा व्यापयद्विभो ! ॥ ३१ ॥

यथा हि पूर्वजाः पापात्स्वर्गाद्वै निपतन्त्यधः ।
कूटसाक्ष्यं च ये कुर्युर्व्यवहारच्युतास्तथा ॥ ३२ ॥

शत्रुघ्नो विस्मयाविष्टो बाणं चान्यं समाददे ।
तं शरं कालसंकाशं यावद्धनुषि संदधे ॥ ३३ ॥

तावत्स चापं सशरं चिच्छेद कुपितो लवः ।
ततो जग्राह शत्रुघ्नो लवणं येन चावधीत् ॥ ३४ ॥

तद्धनुस्तं शरं दिव्यं सूर्यवैश्वानरप्रभम् ।
मुमोच बाणं रुचिरं हतोऽसीति वचस्तथा ॥ ३५ ॥

अमोघं स शरं ज्ञात्वा लवः सस्मार तं कुशम् ।
अस्मिन्नवसरे भ्राता कुशो मे विद्यते यदि ॥ ३६ ॥

तदाऽस्य बाणस्य भयं न स्यान्मम कदाचन ॥ ३७ ॥
अथ ते जानकीसत्यात्सातिव्रत्यादमुं शरम् ।

छेत्स्यामि मे स्यात्ततः कीर्तिरिति बाणं मुमोच सः ।
तेन बाणेन तं बाणं मध्ये चिच्छेद बालकः ॥ ३८ ॥

जैमिनिरुवाच—

पूर्वार्धं न्यपतद्भूमावुत्तरार्धं च नापतत् ।
तेनार्धेन धनुश्छिन्नं लवस्य हृदयं तथा ॥ ३९ ॥

स छिन्नधन्वा हृदि ताडितो भृशं
विभग्नचापो निपपात भूतले ।
शिखी सुवेषो रुधिरावलिप्तो
मुमोह बालो न विवेद किंचन ॥ ४० ॥

ततः शंखाश्च भेर्यश्च वादयन्तः सुहर्षिताः ।
योधाः शत्रुघ्नसैन्यस्थाः मृतशेषा जगर्जिरे ॥ ४१ ॥

मुमुचुस्तं हयं वीरा भीतं दृष्ट्वा च तं लवम् ।
मुक्तः स तुरगो योधैर्बभ्रामो पवने तदा ॥ ४२ ॥

कृपाविष्टश्च शत्रुघ्नो लवमुत्थाप्य पाणिना ।
रामाकृतिरयं बालः सिच्यतां पयसाऽधुना ॥ ४३ ॥

ततस्ते सेवकाः शीघ्रमम्भोभिः सिषिचुर्लवम् ।
सजीवं रथमारोप्य पृष्ठतोऽश्वस्य ते ययुः ॥ ४४ ॥

इति कुशलवोपाख्याने
लवमूर्च्छाप्राप्तिर्नाम
पञ्चमोऽध्यायः

---

## षष्ठोऽध्यायः

जैमिनिरुवाच

अश्वे प्रचलिते तस्मिंल्लवे नीते महारथैः ।
अश्रुपूर्णमुखाः सीतां मुनिपुत्रास्तदा ययुः ॥ १ ॥
सीते ! बद्धो लवेनाश्वः कस्यचिन्नृपतेर्बलात् ।
नृपतेस्तस्य सैन्येन पुत्रस्ते युयुधे लवः ॥ २ ॥
निहत्य सैन्यं बालोऽसौ श्रान्तो वीरेण केनचित् ।
धृतो हस्तगतं छित्त्वा धनुर्नीतः पुरं प्रति ॥ ३ ॥
तद्वाक्यमाकर्ण्य बभूव जानकी
चित्रस्थिता देववरांगना सती ।
यथा हि विद्युद्ध्वनिना कुमारिका
धनी नरो वस्त्वपहारतो यथा ॥ ४ ॥

सीतोवाच—

मनसा कर्मणा वाचा यद्यहं रामतत्परा ।
तेन सत्येन मे पुत्रो लवोऽस्तु कुशली रणे ॥ ५ ॥
तावज्जीव्याल्लवः पुत्रो यावज्ज्येष्ठः समाव्रजेत् ।
एकाकी निहतो बालः पापिष्ठैस्तैर्महारथैः ॥ ६ ॥
रुरोद सा भृशं बाला पुत्रशोकेन पीडिता ।
मामनापृच्छ्य यातोऽसि शासने निरतो लव ! ॥ ७ ॥

चन्द्रबिम्बसमानं ते मुखं बाणैरभिद्यत ।
गात्रं च शकलीजातं लवस्य निशितैः शरैः ॥ ८ ॥

कन्दमूलफलाशी च द्वादशाब्दो विचक्षणः ।
परं तु युद्धयतां तेषां शूराणां तं च बालकम् ॥ ९ ॥

कराः कथं प्रवृत्तास्ते निर्दयानां च पापिनाम् ।
अस्मिंश्च समये तातो वाल्मीकिर्न कुशो बली ॥ १० ॥

कस्येदं पुरतो वक्ष्ये दुःखं प्राप्तं सुदारुणम् ।

जैमिनिरुवाच—

तावत्समित्कुशाहारी वनान्निवर्तते कुशः ।
आगच्छतः कुशस्याथ दुर्निमित्तानि भारत ! ॥ ११ ॥

बहूनि पथि जातानि चित्तोद्वेगकराणि च ।
अपसव्यं मृगा यान्ति नदन्तो भैरवं रवम् ॥ १२ ॥

ततः स व्यथयाविष्टो रामपुत्रो रघूद्वहः ।
चिन्तयामास मनसा केशवं विघ्नहारिणम् ॥ १३ ॥

चिन्तयाविष्टमनसो बाहू तौ स्फुरितौ भृशम् ।
नेत्राभ्यां स्वयमेवाम्भः सुस्रुवे विव्यथे मनः ॥ १४ ॥

एवं स आश्रमद्वारं कुशः प्राप्तो व्यचिन्तयत् ।
लवो जवेन चायाति कथं मे सम्मुखो न हि ॥ १५ ॥

आयातं तं लवं प्रातर्निवारयितवानहम् ।
तस्मात्किं कुपितो नैति केन चासौ धृतो लवः ॥ १६ ॥

इत्येवं चिन्तयन्वीरो ददर्श जननीं स्वकां ।
सीतां नमस्कृत्य कुशो जगाद वचनं शुभम् ॥ १७ ॥
मातः ! कस्मात्प्रलापोऽयं क्रियते क्व लवो गतः ।

सीतोवाच—

वत्स ! त्वयि गतेऽरण्ये फलान्याहर्तुमञ्जसा ॥ १८ ॥
सहितो मुनिपुत्रैस्तु लवः क्रीडापरायणः ।
उद्यानं गतवांस्तत्र कस्यचिन्नृपतेर्हयः ॥ १९ ॥
विचरन्निच्छया प्राप्तो ह्यग्रहीत्तं बलाल्लवः ।
यथाबलं युद्ध्यमानो रणे मूर्च्छामुपागतः ॥ २० ॥
तैर्नीयते पुरं बद्ध्वा जीवन्वा मृत एव वा ।
कस्तं मोचयिता बालं त्वां विना कुश पुत्रकः ! ॥ २१ ॥
यथा विष्णुः स्मृतो भक्तं संसारान्मोचयेद् द्रुतम् ।
तत्तस्या वचनं श्रुत्वा त्रिशाखां भ्रुकुटीं दधत् ॥ २२ ॥
नेत्रे विलोहितो बिभ्रत्कुशो वचनमब्रवीत् ।

कुश उवाच—

अद्य मद्बाणभिन्नानां वैरिणां रुधिरं धरा ॥ २३ ॥
पास्यते रुधिरं कोष्णं शोषितं सूर्यभानुभिः ।
इन्द्रश्च वरुणो वापि कुबेरो वा महाबलः ॥ २४ ॥
यमश्च यक्षगंधर्वास्तेषां साहाय्यकारिणः ।
भवन्तु सर्वे देवाश्च साध्याश्चापि मरुद्गणाः ॥ २५ ॥

तथाऽपि तान् रणे जित्वा लवं तं परिमोचये ।
एष गच्छामि भो मातः निषङ्गौ धनुरेव च ।
प्रदेहि चर्मखड्गं च किरीटं कवचं तथा ॥ २६ ॥
तत्पुत्रवचनं श्रुत्वा सत्वरं जानकी तदा ।
प्रविश्य शालां तां रम्यां प्रददाविषुधी धनुः ॥ २७ ॥
चर्मखड्गं किरीटं च कवचं च कुशोऽग्रहीत् ।
सन्नद्धः कवची खड्गी चापबाणधरो युवा ॥ २८ ॥
कुशो ययौ नमस्कृत्य जननीं तां च जानकीम् ।
सीतयाऽसौ प्रयुक्ताशीः कुशो बाहू व्यताडयत् ॥ २९ ॥
विस्फारयन्धनुश्चोग्रं जगाम त्वरितो बली ।
यथा मत्तद्विपान् सिंहीतनयोऽभ्येति निर्भयः ॥ ३० ॥

गच्छतस्तांस्ततो दृष्ट्वा शत्रून् दूरादथाह्वयत् ।
तिष्ठन्तु वैरिणः सर्वे यदि शक्तिर्हि विद्यते ॥ ३१ ॥
नो चेद्बन्धुर्मदीयोऽसौ मुच्यतां वाथ युद्ध्यताम् ।
अनिर्जित्य कुशं वीरं नोपसर्पितुमर्हथ ॥ ३२ ॥
तच्छ्रुत्वा वचनं घोरं योधा वाक्यमथाब्रुवन् ।
कोऽयमायाति वीरोऽसौ खड्गचर्मधरो युवा ॥ ३३ ॥
शरचापयुतः शूरः किरीटी कवची महान् ।
कालो नूनं हि सर्वेषामयं नो भविता किल ॥ ३४ ॥
इति जल्पन्ति ते सर्वे सैनिका भयविह्वलाः ।
ध्वजाः कणकणायन्ते द्रुमा वातेरिता इव ॥ ३५ ॥

किरीटानि च वीराणां गृध्राः परपशुर्म्बरात् ।
तस्मिन्काले निषङ्गेभ्यः स्वयं निर्यान्त्यलं शराः ॥ ३६ ॥

कोशेभ्यश्च पृथग्भूताः स्वयमेवासयो ययुः ।
चण्डो वातः प्रववृते द्रुमानुन्मूलयन्ध्वजान् ॥ ३७ ॥

रजसा संवृतं व्योम सूर्योऽन्तर्धानमागमत् ।
क्षणात्प्रशान्ते रजसि वीरास्तं ददृशुः कुशम् ॥ ३८ ॥

जैमिनिरुवाच—

आयान्तं तं कुशं दृष्ट्वा शत्रुघ्नो वाक्यमब्रवीत् ।
गच्छ सेनापते ! शीघ्रं निवारय शिशुं शरैः ।
यावत्सैन्यं व्यूहयामस्तावद्युध्यस्व मारिष ! ॥ ३९ ॥

सेनापतिरुवाच—

अहमेनं हनिष्यामि प्रसादात्तव सुव्रत ! ।
इत्युक्त्वा प्रययौ बालं सेनाध्यक्षस्तदा बली ॥ ४० ॥
तिष्ठ तिष्ठेति चोवाच विव्याध दशभिः शरैः ।
कुशस्तानच्छिनद्बाणान् सेनावाहमताडयत् ॥ ४१ ॥
चतुर्भिश्चतुरोऽस्याश्वाञ्जघान कुपितः कुशः ।
सारथेश्च शिरः कायाज्जहार प्रहसन्निव ॥ ४२ ॥
रथं च तिलशः कृत्वा तान्हत्वा पार्ष्णिसारथीन् ।
चिच्छेद च धनुस्तस्य कवचं चातिनिर्मलम् ॥ ४३ ॥

द्वाभ्यां शराभ्यां चिच्छेद हस्तौ तस्य दुरात्मनः ।
चरणौ व्यलुनात्तस्य जङ्घे ते मांसले कुशः ॥ ४४ ॥

जहार श्मश्रुलं वक्त्रं कण्ठाज्ज्वलितकुण्डलम् ।
सेनावाहे हते तस्मिन्हाहाकारो महानभूत् ॥ ४५ ॥

सेनावाहं हतं दृष्ट्वा भ्राता तस्य नगाह्वयः ।
आजगाम गजारूढः शक्त्या तमहनत्कुशम् ॥ ४६ ॥

तां शक्तिं वह्निकूटाभां ज्वलन्तीमशनीमिव ।
चिच्छेद पञ्चभिर्बाणैः सीतासूनुर्महाबलः ॥ ४७ ॥

चरणांश्चतुरोऽप्यस्य गजस्य व्यलुनात्कुशः ।
स छिन्नचरणात्तस्माद् गजादाप्लुत्य धारयन् ॥ ४८ ॥

गदां विचित्रां महतीं नगोऽसौ व्यगमत्कुशम् ।
कुशस्तं गदिनं हस्तं चिच्छेदाशीविषोपमम् ॥ ४९ ॥

वामहस्तेन भूमिस्थं चक्रं जग्राह सत्वरः ।
तमप्यपातयद् भूमौ बाहुं चक्रधरं कुशः ॥ ५० ॥

तथाऽपि धावमानस्य चरणावच्छिनद् द्रुतम् ।
स छिन्नचरणो वीरश्छिन्नबाहुर्नगो बली ॥ ५१ ॥

धूलिधूसरसर्वाङ्गो रुधिरेण परिप्लुतः ।
आससाद नगो बालं राहुः सूर्यमिवाम्बरे ॥ ५२ ॥

छिन्नाभ्यामथ बाहुभ्यां गदां चिक्षेप तं प्रति ।
स तया ताडितो वीरः पदान्न चलितः पदम् ॥ ५३ ॥

तुतोषास्य कुशो वीरः प्रतापेन च तादृशः ।
ततः सुनिशितं बाणं वधायास्य मुमोच सः ॥ ५४ ॥
शरेण तेन वै छिन्नं शिरः खे तद्व्यलीयत ।
शंभुना मुण्डमालार्थं गृहीतं तद्वरं शिरः ॥ ५५ ॥
एवं नगे विनिहते कुशः कोपसमन्वितः ।
तत्सैन्यं व्यहनद्बाणैर्दण्डपाणिरिवान्तकः ॥ ५६ ॥
गजान्पर्वतसंकाशान्विददार वृषेव सः ।
उच्छलद्रुधिरेणाथ वीरास्ते रक्तवाससः ॥ ५७ ॥
अजायन्त भृशं विप्राः पुष्पिता इव किंशुकाः ।
बाणैः पतद्भिरस्तु बलादग्निः प्रादुरभून्महान् ॥ ५८ ॥
रथनागेन्धनो वह्निर्ववृधे स च बालकः ।
पतद्भिर्वारणैर्मत्तैर्म्रियन्ते स्म महारथाः ॥ ५९ ॥
स्वयमेव विदीर्यन्ते रथाश्चक्राणि ते ध्वजाः ।
जहुः प्राणानश्वचराः शरैर्भिन्नकलेवराः ।
हस्त्यश्वरथसंघाताः पदाता न्यपतन्भुवि ॥ ६० ॥
एवं विनिहतं सैन्यं रथनागसमाकुलम् ।
कुशेन तेन वीरेण स्वधर्मेणेव दुष्कृतम् ॥ ६१ ॥

इति कुशलवोपाख्याने
कुशयुद्धवर्णनं नाम
षष्ठोऽध्यायः

---

## सप्तमोऽध्यायः

जैमिनिरुवाच—

तत: प्राप्तो महाबाहुः शत्रुघ्नो धुनयन्धनुः ।
विव्याध नवभिर्बाणैः कुशं तं कोपपूरितः ॥ १ ॥
ततः कुशोऽपि बलवान् रथं साश्वं व्यचूर्णयत् ।
शत्रुघ्नं हृदि विव्याध शरेणानतपर्वणा ॥ २ ॥
पुनश्च षष्ट्या विव्याध नाराचानां स्तनान्तरे ।
सोऽतिविद्धस्तु शत्रुघ्नो रथोपस्थे पपात ह ॥ ३ ॥
यथा मत्तो हि मातङ्गः स्खलितः पर्वतेऽपतत् ।
हतशेषाश्च ये योधास्तेऽप्ययोध्यां ययुर्द्रुतम् ॥ ४ ॥
अथ मूर्च्छां विहायाऽसौ लवोऽपश्यत्स्वबान्धवम् ।
उत्थाय परिरभ्यैनं कुशं वीरं जहर्ष च ॥ ५ ॥
उवाच च कुशं भ्रातर्धारयामि तुरङ्गमम् ।
तेनानुनीतः स लवो बबन्धे तं तुरङ्गमम् ॥ ६ ॥
उभौ तौ भ्रातरौ युक्तौ यथा वायुविभावसू ।
प्रतीक्षमाणौ वीराणामागमं तस्थतुर्बलात् ॥ ७ ॥

जैमिनिरुवाच—

मृतशेषाश्च ये योधास्ते गत्वा राममब्रुवन् ।
समासीनं दीक्षितं च मृगशृङ्गपरिग्रहम् ॥ ८ ॥
त्वचं रुरोर्वसानं च दण्डधारं सुमेखलम् ।
भ्रातृभ्यां सहितं शूरं मुनिभिः परिवारितम् ॥ ९ ॥

तिलाज्यहोमसंभूतधूमेनारुणलोचनम् ।
सुवर्णसीतया युक्तं मण्डपस्थमिदं वचः ॥ १० ॥

योधा ऊचुः—

हे राम ! तेऽश्वः पृथिवीं चचार
वीरोऽपि कश्चिन्न दधार तं पुनः ।
एकोऽग्रहीत्त्वादृश एव बालक-
स्तेनास्मदीयं निहतं बलं च ॥ ११ ॥
धृतः कथंचित्तव चानुजेन
च्छित्वा धनुः श्रान्ततनुर्हि बालः ।
तस्यापरो बन्धुरदीनसत्त्वः
प्राप्तः स चापासिधरो बलीयान् ॥ १२ ॥
तेनापि शेषं निहतं तवोग्रं
सैन्यं च सेनापतिना समेतम् ।
तस्मिन्हते कश्मलमाशु सैन्यं
जगाम सर्वाः प्रदिशो दिशश्च ॥ १३ ॥

जैमिनिरुवाच—

तेषां तद्वचनं श्रुत्वा रामो विस्मयमागतः ।
उवाच किमयं जल्पो युष्माकं किमुत भ्रमः ॥ १४ ॥
पैशाच्यं किमु युष्माकं शत्रुघ्नः केन पात्यते ।

याधा ऊचुः

न जल्पोऽस्मासु राजेन्द्र ! न भ्रमो न पिशाचता ॥१५॥

रणे शेते स शत्रुघ्नः शिशोर्बाणैः प्रपीडितः ।
ततः सुदुःखितो रामो विलपन्निदमब्रवीत् ॥ १६ ॥

राम उवाच—

विप्रद्विट् लवणो येन घातितो निशितैः शरैः ।
मदीयं वचनं कर्ता स शत्रुघ्नोऽर्भकैर्हतः ॥ १७ ॥

केन दोषेण मे भ्राता ह्यवस्थां तादृशीं गतः ।
एहि लक्ष्मण ! भद्रं ते शृणु मे परमं वचः ॥ १८ ॥

अहं हि दीक्षितो भ्रातः ! न मया योद्धुमिष्यते ।
सैन्येन महता युक्तो भ्राता तिष्ठति यत्र ते ॥ १९ ॥

तत्र गत्वा मयोद्धव्यं मोच्योऽश्वः सत्वबान्धवः ।
तद्वाक्याल्लक्ष्मणस्तूर्णं प्रययौ सैनिकैः सह ॥ २० ॥

ततः प्राप्तमनीकं तल्लक्ष्मणस्य भयानकम् ।
यत्राऽसौ मूर्च्छितः शेते शत्रुघ्नः सैनिकैः सह ॥ २१ ॥

ततः सुमित्रातनयः पुरस्ताज्-
ज्येष्ठो ययौ कालजिता समेतः ।
ददर्श वीरं विकलं सुकेशं
शत्रुघ्नमात्यन्तिकजीवशेषम् ॥ २२ ॥

इति कुशलवोपाख्याने
लक्ष्मणागमनं नाम
सप्तमोऽध्यायः

---

## अष्टमोऽध्यायः

जैमिनिरुवाच—

तत्सैन्यं भीषणं दृष्ट्वा तत्प्रभुं लक्ष्मणं तथा ।
उवाच निर्भयो वीरः शत्रूणामङ्कुशः कुशः ॥ १ ॥
किमिदानीं च कर्त्तव्यं लव ! सैन्यं समागतम् ॥
वारणानां रथानां च संख्या कर्तुं न पार्यते ॥ २ ॥

लव उवाच—

युद्धमत्र प्रकर्त्तव्यं हन्तव्याः सैनिकास्त्वमी ।
कूष्माण्डफलवद्भेद्या रथाश्छेद्या रसालवत् ॥ ३ ॥
शिरांसि पक्वफलवत्पातनीयानि भूतले ।
भ्रातः कुश ! महाबाहो समग्रस्य बलस्य ते ॥ ४ ॥
न योग्यमेतत्सैन्यं स्यादगस्त्यस्येव सागरः ।
न च सिंहस्य पुरतो जम्बूकाली प्रसर्पति ॥ ५ ॥
पुण्यां भागीरथीं दृष्ट्वा पापराशिः क्षयं व्रजेत् ।
तथा त्वां समरे सेना दृष्ट्वा शीघ्रं विनश्यति ॥ ६ ॥
केवलं श्रोत्रियैरेव धार्यस्त्वं न च सैनिकैः ।
अहं हि वाहिनीवेगान्न भग्नः स्यां कथञ्चन ॥ ७ ॥
उत्तिष्ठ धनुरुद्यम्य बाणान्योजय मा चिरम् ।
अहं सैन्यमिदं सर्वं रुणध्मि निशितैः शरैः ॥ ८ ॥

इत्येवमुक्त्वा वचनं संजग्माते महाबलौ ।
दग्धुं सैन्याटवीं किं तौ प्राप्तौ वायुविभावसू ॥ ९ ॥

तौ प्रविष्टौ चमूं घोरां लक्ष्मणेनाभिपालिताम् ।
वर्षमाणौ शरान्घोराञ्जीमूताविव पर्वते ॥ १० ॥

आवर्तः सुमहानासीत्तयोः सैन्ये प्रविष्टयोः ।
मैनाकमन्दराभ्यां तु मथ्यमाने इवार्णवे ।
सिंहनादात्तयोरेव योजनार्धं गतं बलम् ॥ ११ ॥

कालजिल्लक्ष्मणौ क्रुद्धौ रुरुधाते शरैः कुशम् ।
लक्ष्मणस्य च सैन्येन लवो रुद्धोऽतिपौरुषः ॥ १२ ॥

गदासिशक्त्यृष्टिपरश्वधैश्च
कुन्तैस्तथा संभ्रमवाजियुक्ताः ।
पाशैः करग्राहकरैश्च बाल-
मेकाकिनं ते परिवव्रुरेनम् ॥ १३ ॥

द्विषो निजघ्ने निशितैः क्षुरप्रैः
शिरांसि भूमावपतन् स्फुरन्ति ।
लवो लवेनाहवकर्म कुर्वन्
ननाद कल्पान्तकरो यथा यमः ॥ १४ ॥

शतं शतेन विव्याध द्विशतं द्विशतेन च ।
सहस्रार्धं तदर्धेन सहस्रमयुतेन च ।
वीराणामहनत् क्रुद्धः प्रयुतं प्रयुतेन च ॥ १५ ॥

जैमिनिरुवाच—

चत्वारिंशदूभ्रमीर्हत्वा गजानां सिंहविक्रमः ।
शरैः संभिन्नसर्वाङ्गो दिशः सर्वा व्यलोकयत् ॥ १६ ॥
इतः सैन्यं प्रचलितं रथवारणसंकुलम् ।
लसत्खङ्गप्रभाभिश्च श्यामीभूतं गजैरपि ।
ददर्श घोरं स लवो न कुशं पृष्ठुतस्तथा ॥ १७ ॥
तदा दध्यौ चिरं बालो भ्राता मे क गतः कुशः ।
इति चिन्तयतस्तस्य लवस्य धनुरुत्तमम् ॥ १८ ॥
जहार राक्षसः क्रुद्धो मातुलो लवणस्य यः ।
रुधिराक्ष इति ख्यातो रामं शरणमागतः ॥ १९ ॥
लवो जवात्पलायन्तं धनुरादाय राक्षसम् ।
तिष्ठ तिष्ठेति चोवाच मत्तो जीवन्क यास्यसि ॥ २० ॥
इत्येवमुक्त्वा वचनं चक्रं जग्राह पाणिना ।
जनन्याश्चरणौ चित्ते चिन्तयित्वा महाभुजः ॥ २१ ॥

स चक्रमादाय खमुत्पपात
श्येनो यथा भक्ष्यमिव प्रगृह्णन् ।
शिखीव पुष्पान्क्षतजावलिप्तो
रराज साक्षादिव चक्रपाणिः ॥ २२ ॥

गगनस्थं लवं दृष्ट्वा योधा बिभ्युः पतेदिति ।
ततश्चापेषु रुचिराञ्छरांस्ते युयुजुर्भयात् ।
केचिद्दधुश्च चर्माणि सुदृढानि स्वमूर्धसु ॥ २३ ॥

अस्मानुपरि वीरोऽसौ पतिष्यति न संशयः ।
इति कृत्वा मतिं केचित्स्यन्दनस्याध आगमन् ॥ २४ ॥

बाणनिर्भिन्नवर्ष्माणो वारणा भुवि शेरते ।
तेषामुदरमध्यस्थाः केचिच्छन्ना महारथाः ॥ २५ ॥

एवं स्म भीता वीरा ये तेऽप्येवं चक्रिरे तदा ।
अवशिष्टा महावीरा निर्यातास्तु दशैव हि ॥ २६ ॥

राज्ञो दशरथस्यासीन्मन्त्री सुज्ञो हि तत्सुताः ।
जितश्रमो धार्मिकश्च सुकेतुः शत्रुसूदनः ॥ २७ ॥

चन्द्रो मदः शलः कालो मल्लः सिंहश्च ते दश ।
विव्यधुः सायकैस्तीक्ष्णैर्लवं खे चक्रपाणिनम् ॥ २८ ॥

दशभिर्दशभिर्बाणैश्चिच्छिदुश्चक्रमुच्छ्रिताः ।
छिन्नचक्रो लवः शीघ्रं जग्राह परिघं भुवि ॥ २९ ॥

जघान मन्त्रिपुत्रांस्तान्परिघेण हसन्निव ।
ते छिन्नचर्मवर्माणो निपेतुः शोणितोच्छ्रिताः ॥ ३० ॥

तावत्स राक्षसः प्राप्तो रुधिराक्षो गदां दधत् ।
गदया ताडयामास मूर्ध्नि तं लवमोजसा ॥ ३१ ॥

जगाम मूर्छां बालोऽसौ मुहूर्त्तं भूतलेऽपतत् ।
मूर्च्छां विहाय स लवस्तदा तस्थौ गजेन्द्रवत् ॥ ३२ ॥

कुन्तमादाय भूमिस्थं प्रययौ राक्षसं प्रति ।
केशेष्वाक्षिप्य तं दुष्टं कुन्तेनाभ्यहरच्छिरः ॥ ३३ ॥

स्वधनुर्जगृहे वीरः सूर्यदत्तं ननाद च ।
मुमोच निशितान् बाणान् सैन्यक्षयकरान् बहून् ॥ ३४ ॥

ततः सैन्येन महता वेष्टितः पुनरेव सः ।
गर्भस्थो हि यथा जन्तुरज्ञानेन बहिः स्थितः ॥ ३५ ॥

वेष्ट्यते तद्वदप्येषस्तेन सैन्येन वेष्टितः ।
तृणैरावेष्टितो वह्निस्तान्येव दहति ध्रुवम् ।
तद्वत्स बालस्तत्सैन्यमदहत् कोपपूरितः ॥ ३६ ॥

इति कुशलवोपाख्याने
लवयुद्धविजयवर्णनो नाम
सप्तमोऽध्यायः

---

## नवमोऽध्यायः

जैमिनिरुवाच—

कुशस्तं लक्ष्मणं दृष्ट्वा प्रययौ सिंहविक्रमः ।
आयातं पञ्चभिर्बाणैर्लक्ष्मणोऽभिजघान तम् ॥ १ ॥
तैस्ताडितः कुशो वीरस्त्विदं वचनमब्रवीत् ।

कुश उवाच—

स्थिरो भव महावीर ! मा पदं पृष्ठतः कुरु ॥ २ ॥

इत्येवमुक्त्वा वचनं बाणं चैकं मुमोच सः ।
तेन बाणेन स रथो बभ्राम घटिकाद्वयम् ॥ ३ ॥

अतिभ्रमेण चत्वारो वाजिनः पञ्चतां ययुः ।
ततोऽन्यं रथमारुह्य लक्ष्मणो मुमुचे शरान् ॥ ४ ॥

द्वाभ्यां शराभ्यां चिच्छेद कवचं चातिनिर्मलम् ।
किरीटं च त्रिभिर्बाणैस्तदद्भुतमिवाभवत् ॥ ५ ॥

स भिन्नकवचो वीरो मुक्तत्वक् सर्पादिव ।
तस्मिन्रणे रराजाथ सीतासूनुर्गतक्लमः ॥ ६ ॥

अब्रवील्लक्ष्मणं वीरः कुशो विनयपूर्वकम् ।
द्विषद्भावं परित्यज्य मम भारस्त्वया हृतः ॥ ७ ॥

उपकारः कृतो नूनं त्वया कर्ता तथाऽप्यहम् ।
सैन्यभारो महानस्ति तव लक्ष्मण ! साम्प्रतम् ॥ ८ ॥

तं सर्वं नाशयिष्यामि पश्य मे हस्तलाघवम् ।
अथ सूक्तं जपन्नुच्चैराथर्वश्रुतिविश्रुतम् ।
आग्नेयमस्त्रं मुमुचे सीतासूनुर्महाबलः ॥ ९ ॥
आग्नेयास्त्रात्ततो ज्वालाः प्रादुर्भूताः सहस्रशः ।
ताभिस्तस्य रथो दग्धो लक्ष्मणस्य महात्मनः ॥ १० ॥
सैन्यं दग्धं पताकाश्च वासांस्याभरणानि च ।
ज्वलत्कञ्चुकिनो वीरा दग्धश्मश्रुशिरोरुहाः ॥ ११ ॥
दह्यन्ते स्म सटापुच्छं वाजिनां हंसवर्णिनाम् ।
रथाश्वक्राणि दह्यन्ते छत्राणि चामराणि च ॥ १२ ॥
आयुधानि च सर्वाणि दग्धान्यासन् हविर्भुजा ।
दह्यमानं ततो दृष्ट्वा सैन्यं शत्रुनिवर्हणः ॥ १३ ॥
लक्ष्मणः शमयामास तदस्त्रं वारुणास्त्रतः ।
ततः कुशो महावीरो वायव्यं संदधे शरम् ॥ १४ ॥
वायव्यास्त्रेण ते सर्वे वीरा वियति डिड्यिरे ।
तदा रथगजा मत्ताः पतन्त्यनिलरंहसा ॥ १५ ॥

जैमिनिरुवाच—

सेनानीः कालजित् क्रुद्धो लक्ष्मणं वाक्यमब्रवीत् ।
संहरिष्याम्यहं बालं वेलेव मकरालयम् ॥ १६ ॥
यावत्कनिष्ठो नायाति तावत्कुर्वे पराक्रमम् ।
इत्येवमुक्त्वा वचनं कुशं प्रायात्स कालजित् ॥ १७ ॥

सेनाध्यक्ष उवाच—

त्वमद्य नूनं संप्राप्तो रामचन्द्रबलक्षयः ।
जातो यद्यपि कुर्वेऽहं कुशस्योन्मूलनं ध्रुवम् ॥ १८ ॥
कालजिद्भाषितं श्रुत्वा कुशो वचनमब्रवीत् ।

कुश उवाच—

अजागलस्तनस्येव व्यर्थं नाम विभाव्यते ।
बधिरस्य यथा कर्णौ वृथा श्रवणवर्जितौ ॥ १९ ॥
बालानां हि यथा ब्रह्म तृणस्याग्निर्यथा वृथा ।
सेनाध्यक्षः कृतः केन त्वादृशा बहुजल्पकः ॥ २० ॥
त्वयि पश्यति रे मूढ ! सैन्यं हन्ति ममानुजः ।
बाणं छिन्धि मया मुक्तं तव जिह्वाविदारकम् ॥ २१ ॥
इत्युक्त्वा कालजिज्जिह्वामलुनादिषुणा कुशः ।
मौनी त्वं सांप्रतं जातो वाहिन्यां संस्थितं लवम् ॥ २२ ॥
अनयाशु च संपूज्य त्वं मौनव्रतमाचर ।
अत्यन्तं कालजित् क्रुद्धः शरेणानतपर्वणा ॥ २३ ॥
कुशं तं हृदये विद्ध्वा वामहस्तमताडयत् ।
चिच्छेद तस्यापि कुशो बाणैर्हस्तं च दक्षिणं ॥ २४ ॥
ततोऽर्धचन्द्रेण शिरश्चिच्छेदास्य सकुण्डलम् ।
हते कालजिति प्रौढे कुशं सौमित्रिरभ्यगात् ॥ २५ ॥

वर्षन् बाणगणान् घोराञ्छालतालवटच्छिदः ।
कुशं जघान हृदये बाणैः षड्भिरथो दृढम् ॥ २६ ॥

शक्तिं चिक्षेप सौमित्रः कुशं प्रति गदामपि ।
कुन्तं खड्गं च परशुं तोमरं चर्म चाक्षिपत् ॥ २७ ॥

कुशस्तु सप्तधातूनि शस्त्राणि परिचिच्छिदे ।
ननर्द सिंहवद्वीरस्तिष्ठ तिष्ठ शरान् सह ॥ २८ ॥

इत्येवमुक्त्वा नाराचान्
पञ्चवाल्मीकिनाऽर्पितान् ।
गार्ध्रपत्रान् सुनिशितान्
विषमान् पन्नगानिव ॥ २९ ॥

ज्वलदग्निकणान् वीरः कुशो धनुषि संदधे ।
अथ मुक्ताः शरा व्योम्नि ज्वलतो मर्मभेदिनः ॥ ३० ॥

विभिदुर्हृदयं तस्य लक्ष्मणस्य महात्मनः ।
सौमित्रिश्च पपातोर्व्यां सूर्यः खादिव निष्प्रभः ॥ ३१ ॥

जैमिनिरुवाच—

ततः शुश्राव निनदं लवस्य स कुशो रणे ।
खड्गचर्मधरश्चायं पुप्लुवे पक्षिराडिव ॥ ३२ ॥

ददर्श तं लवं शूरं वेष्टितं गजपङ्क्तिभिः ।
खड्गेनाभ्यहनत् क्रुद्धो गजांश्च रथिनो बहून् ॥ ३३ ॥

अमीर्जधान ताः सर्वाः क्षणाल्लवममोचयत् ।
वाल्मीकेराश्रमे ताभ्यां सैन्यं सर्वं निपातितम् ॥ ३४ ॥

तस्थतुर्निर्भयौ वीरौ वीक्षमाणौ स्वमाश्रमम् ॥ ३५ ॥

कुशलवोपाख्याने
लक्ष्मणसेनापराजयो नाम
नवमोऽध्यायः

---

# दशमोऽध्यायः

जैमिनिरुवाच

गङ्गातीरे रामचन्द्रो दीक्षितो यज्ञमण्डपे ।
भरतं प्रत्युवाचाथ मुनिभिः परिवारितः ॥ १ ॥

राम उवाच—

कथं नायाति वीरोऽसौ विजित्य हयहारिणौ ।
याभ्यां पराजयं प्राप शत्रुघ्नः स तवानुजः ॥ २ ॥

सौमित्रिं वीक्ष्य सङ्ग्रामे त्रैलोक्यं सचराचरम् ।
स्वप्नमध्ये विलीयेत प्रत्यक्षं कः सहिष्यति ॥ ३ ॥

तमद्य बहुभिर्वीरैः सेवितं रोषपूरितम् ।
पतनादनुजस्यापि भयाज्ज्ञप्तं न तौ क्षमौ ॥ ४ ॥

योधितुं वनजावज्ञौ चपलौ नाथवर्जितौ ।
लक्ष्मणस्य भयात् त्रस्तौ शरणं कं गमिष्यतः ॥ ५ ॥

वाजिनं करसंप्राप्तं पश्यतां बालचेष्टितम् ।
भरत ! प्रेरय जनांस्तं देशं यत्र मे हयः ॥ ६ ॥

जैमिनिरुवाच—

भरतेन समाहूताः पञ्चदूता महाबलाः ।
रामपार्श्वे क्षणादेत्य तानुवाच स्वयं प्रभुः ॥ ७ ॥

राम उवाच—

यात लक्ष्मणमानेतुं ब्रूत मद्वाक्यमेव तम् ।
जीवितेन युतौ युद्धे मोहनास्त्रेण मोहितौ ॥ ८ ॥

रक्षणीयौ त्वया बालौ सागसावपि लक्ष्मण !।
त्वं वीरोऽसि वृतश्चासि शूरैः सर्वास्त्रकोविदैः ॥ ९ ॥

रथस्थोऽसि समर्थोसि विरथौ तौ निराश्रयौ ।
अत्रानय शिशू वेगान्मा पातय रणेऽबलौ ॥ १० ॥

परबाले दयायुक्तं चित्तं कुर्वन्ति ये जनाः ।
ते पुत्रपौत्रैः सहिता जायन्ते भुवि साधवः ॥ ११ ॥

मया न पुत्रवदनं सीतावदनसन्निभम् ।
वीक्षितं भुवि जातेन ततस्तौ मोचयाम्यहम् ॥ १२ ॥

प्रष्टव्यौ कस्य पुत्रौ तौ किमर्थं वनचारिणौ ।
पुत्रयोर्जननी कुत्र तत्पृष्ट्वा तां समानय ॥ १३ ॥

जैमिनिरुवाच—

एवं दिशति रामे तु दूतान्प्रति विशां पते ।
तावद्दूताः शरैर्भिन्नाः क्षतजौघप्रवाहिणः ॥ १४ ॥

लक्ष्मणस्य महावीरा रामं शरणमाययुः ।
राम रामेति जल्पन्तः शंसन्त सुमहद्भयम् ॥ १५ ॥

राम राम महाबाहो त्राह्यस्मान् महतो भयात् ।
बहुलेन बलेनापि वृतः शूरः स लक्ष्मणः ॥ १६ ॥

प्राप तत्काननं घोरं शत्रुघ्नो यत्र मूर्च्छितः ।
ससैनिकः क्षतो बाणैः कुशस्य परितिष्ठति ॥ १७ ॥

कुशसायकभिन्नाङ्गै रुधिरापीडवाहिभिः ।
वीरैर्न ज्ञायते किञ्चित्किंशुकैः पुष्पितैरिव ॥ १८ ॥

वज्रपातसहा वीरा नानाशस्त्रैः प्रपीडिताः ।
न जानन्ति व्यथां ये वै ते कुशेन विमूर्च्छिताः ॥ १९ ॥

लवेनैकेन शिशुना कृता सा वाहिनी घना ।
विमुखा भूभृतं प्राप्ता दृष्ट्वा बालस्य चेष्टितम् ॥ २० ॥

लक्ष्मणस्य बलाध्यक्षः पतितो भुवि राघव ! ।
कालजिद् बहुभिः सार्द्धं कुशबाणैः प्रपीडितः ॥ २१ ॥

लक्ष्मणेन कृतं युद्धं भ्रातरौ वीक्षितौ वने ।
स्वमनः कृपया युक्तं वैरं त्यक्त्वाऽनुजस्य तत् ॥ २२ ॥

ततः कुशं प्रत्युवाच सौमित्रिः स तवानुजः ।
गच्छ बालक ! मुक्तोऽसि कनिष्ठेन समं गृहम् ॥ २३ ॥

जनन्यै ब्रूहि मुक्तोऽस्मि सामयुक्तेन केनचित् ।
लक्ष्मणस्य वचः श्रुत्वा कुशो लक्ष्मणमब्रवीत् ॥ २४ ॥

त्वं गच्छ रामं मुक्तोऽसि दुःखितं त्वां न योधये ।
न क्षमालपाप्यहो रामे साम्प्रतं हि विलोक्यते ॥ २५ ॥

यः सानुजं भवन्तन्तु क्लेशयन्नाऽऽगतः स्वयम् ।
भीतोऽत्र मानसंसर्गकारकाद्राघवादसि ॥ २६ ॥

कुशा धृता त्वन्निमित्तमक्षतो याहि लक्ष्मण ! ।
प्रहराशु शरौघैर्मां पौरुषं चेद्विभाति ते ॥ २७ ॥
लक्ष्मणस्तं जघानाथ हृदये सप्तभिः शरैः ।
ते शरास्तं तदा भित्त्वा बालं युद्धे तथाविधे ॥ २८ ॥
पतिताः कानने तीक्ष्णा बिभिदुः पादपानपि ।
ततः कुशस्य बाणौघैर्लक्ष्मणस्य कलेवरम् ॥ २९ ॥
समाकीर्णं त्वग्विहीनं क्षणादेव रणे कृतम् ।
कर्तुं किं लक्ष्मणो वेत्ति नवीनं स्वं कलेवरम् ॥ ३० ॥
पूर्वाभ्यासेन केनापि तस्माद्बालं प्रबोधितः ।
पश्चात्पपात धीरोऽसौ कुण्डलीसायकैः क्षतः ॥ ३१ ॥
भग्नं बलं ते पतितं गतं राम दिशो दश ।
भ्रातरौ तौ महावीरौ क्षतौ शत्रुघ्नलक्ष्मणौ ॥ ३२ ॥
ताभ्यां विहीना हि वयं तुभ्यं शंसितुमागताः ।
त्यज दीक्षां रघुपते ! कुरु युद्धं वने व्रज ॥ ३३ ॥
यावन्नायान्ति ते बाणाः कुशकार्मुकनिःसृताः ।
नान्यस्य गणना तस्य कुशस्य पुरतः प्रभो ! ॥ ३४ ॥

जैमिनिरुवाच--

एवंविधानि वाक्यानि श्रुत्वा तेषां स राघवः ।
मूर्च्छितो निपपातोर्व्यां भरतस्याग्रजस्तदा ॥ ३५ ॥
गृहीतो भरतेनाथ सिक्तश्चैवाम्भसा रघुः ।
परिमृज्यास्य नेत्रे च समाश्वास्य पुनः पुनः ॥ ३६ ॥

चेतनासहितं वीक्ष्य भरतो वाक्यमब्रवीत् ।

भरत उवाच—

मा विषादे मनः कार्षीर्लक्ष्मणं प्रति राघव ! ॥ ३७ ॥

शत्रुघ्नेन समं युद्धे तवार्थे विनिपातितम् ।
लक्ष्मणस्त्यक्तुकामोऽयं स्वदेहं दुःखितो भृशम् ॥ ३८ ॥

परित्यज्यागतो देवीं यदा प्रभृति कानने ।
सीतादुःखेन नो जीवन्पुनरायाति तेऽन्तिकम् ॥ ३९ ॥

शंसितुं स पुरा प्राप्तस्तवादेशो मया कृतः ।
तथाऽपि न कृशा जाता जानक्यां न च लक्ष्मणे ॥ ४० ॥

संस्मृत्य समये मृत्युमकरोल्लक्ष्मणो हृदि ।
अथ रामनिमित्तं हि यज्ञकार्ये सबान्धवः ॥ ४१ ॥

स्मृत्वा त्यागं हि सीताया युद्धे तत्याज जीवितम् ।
निरपराधां त्यक्त्वा यां वने सीतां समागतः ॥ ४२ ॥

तत्रत्यं किल्बिषं देहे धारयन् संस्थितः सदा ।
तस्याद्य कुशकोदण्डप्रचण्डशरगङ्गया ॥ ४३ ॥

क्षालितं किल्बिषं गात्राद्राम ! पूतोऽद्य लक्ष्मणः ।
भरतं मामपूतं हि न प्रेरयसि किंचन ॥ ४४ ॥

अद्य राघव यास्यामि तत्कर्तुं पावनं वपुः ।
विचारः सकलो जातः सीतात्यागे च ते वने ॥ ४५ ॥

अयोध्यायां स्थितो जीवन्न तथाऽत्र करोम्यहम् ।
कथं हीनोऽत्र तिष्ठामि सीताशत्रुघ्नलक्ष्मणैः ॥ ४६ ॥
एवं वदन्तं भरतं जगाद भरताग्रजः ।

श्रीराम उवाच—

कोऽसौ भरत ! जानीहि स बालो व्रजकानने ॥ ४७ ॥
तमानय कुशं जित्वा सानुजं मम सन्निधौ ।
समुत्थापय वीरौ तौ मूर्च्छितौ मम बान्धवौ ॥ ४८ ॥
हनूमानपि यात्वेष जाम्बवान् वानरैः सह ।
तवानुवृत्तिं कुर्वाणः कुरु वाक्यं ममोदितम् ॥ ४९ ॥

जैमिनिरुवाच—

एवं रामसमादिष्टो हनुमत्प्रमुखैर्वृतः ।
निर्ययौ भरतः क्रोधाद्रथमारुह्य सत्वरः ॥ ५० ॥
निर्गतं बहुलं सैन्यं गगने भूतलेऽपि च ।
राघवस्य पुराद्रम्यान्नरवानरसंकुलम् ॥
भरतः काननं प्राप्य हनूमन्तमुवाच ह ॥ ५१ ॥

भरत उवाच—

हनुमन् ! पश्य संग्रामे कुशबाणैर्निपातिताः ।
रामस्य वीरा बहवो विशिरस्का विबाहवः ॥ ५२ ॥
गजान्रथान्हयान्वीरान्करभान्गतमस्तकान् ।
धावमानान्पुरः पश्य गतस्वास्थ्यानितस्ततः ॥ ५३ ॥

कुतस्तौ पतितौ वीरौ रणे शत्रुघ्नलक्ष्मणौ ।
शोणितेनात्र नीयन्ते बहुलेन महाबलाः ॥ ५४ ॥

भागीरथीं प्रति बलान्नीतौ किं मम बान्धवौ ।
क्वचित्कराः क्वचित्पादाः क्वचिदन्ता नृणामिह ॥ ५५ ॥

दृश्यन्ते वाहनानां तु क्वचित्केशाः क्वचित्स्रजः ।
नदीमिमां समुल्लङ्घ्य व्रज पारं निरीक्षय ॥ ५६ ॥

यथा गतोऽसि लङ्कां त्वं तीर्त्वा जलनिधिं पुरा ।
तत्र तौ पश्य पतितौ बान्धवौ मामकौ भुवि ॥ ५७ ॥

विलोकनीयौ तौ बालौ त्वया कुशलवौ क्वचित् ।

हनूमानुवाच—

तदा तीर्णोऽस्मि भरत ! सागरं सीतया स्वयम् ॥ ५८ ॥

संमुखा सा पुरा जाता विमुखाऽद्य विलोक्यते ।
शोणितौघां नदीं मन्ये दुस्तरां लक्ष्मणाग्रज ! ॥ ५९ ॥

तथापि तव वाक्येन वीक्षितुं यामि बान्धवौ ।
इत्युक्त्वा तां नदीं तीर्त्वा ददर्श पतितावुभौ ॥ ६० ॥

शरनिर्भिन्नसर्वाङ्गौ रणे शत्रुघ्नलक्ष्मणौ ।
प्रार्थयन्ताविव धरां सीतात्यागेन दुःखिताम् ॥ ६१ ॥

मा कोपं व्रज नौ स्थानं देहि सीताद्रुहोरिति ।
हनूमांस्तौ गृहीत्वाऽथ बाहुभ्यां पुनरागतः ॥ ६२ ॥

भरतस्य समीपं हि मूर्च्छितौ तरसा नृप ! ।
ददर्श भरतो भिन्नौ कुशबाणैः समन्ततः ॥ ६३ ॥

रथे संस्थापयामास भ्रातरौ विस्मयान्वितः ।
रक्षणे चाङ्गदं दत्त्वा हनूमन्तमुवाच ह ॥ ६४ ॥

क्व गतौ बालकौ वीरौ रामसैन्यनिपातकौ ।
हनूमन् ! पश्य कुत्राऽपि बालवेषधरौ सुरौ ॥ ६५ ॥

गतौ लक्ष्मणशत्रुघ्नौ पातयित्वा महारणे ।

हनूमानुवाच—

मेघनादशरैर्नायं मूर्च्छितो लक्ष्मणस्तथा ॥ ६६ ॥

यथा कुशशरैर्व्याप्तो न जहाति हि कश्मलम् ।
मूर्छना मामुपैत्येषा वीक्ष्य लक्ष्मणमातुरम् ।
पश्यन्ति सैनिकाः सर्वे बालाभ्यां निहतं बलम् ॥ ६७ ॥

कुशलवोपाख्याने

हनूमद्वाक्यं

नाम

दशमोऽध्यायः

---

# एकादशोऽध्यायः

जैमिनिरुवाच—

एतस्मिन्नन्तरे प्राप्तो धनुर्विस्फारयन् कुशः ।
खड्गचर्मधरो वीरो लवः संग्राममागमत् ॥ १ ॥

प्रकाशयित्वा पृथिवीं करैः सागरमेखलाम् ।
सूर्योऽन्तर्धानमाऽऽपेदे ध्वान्तश्च समपद्यत ॥ २ ॥

आत्मनश्च परेषां च वीरो न ज्ञायते तदा ।
अन्योऽन्यं नामभिस्ते वै क्रोशन्ति रणकोविदाः ॥ ३ ॥

गजा मत्ताश्च धावन्ति चूर्णयन्तो रथान् बहून् ।
रथवेगेनाश्ववीराः पतन्ति हयपृष्ठतः ॥ ४ ॥

हयवेगेनाश्ववीराः पत्तयो भुवि शेरते ।
दोधूय खड्गं स लवः प्रविवेश महाचमूम् ॥ ५ ॥

शिरस्याधाय चर्माशु खड्गेनाश्वपदोऽच्छिनत् ।
हस्तिहस्तान्विशालांश्च चिच्छेद स कुशानुजः ॥ ६ ॥

दीर्घहस्तौ समालम्ब्य व्रजन्नुपरि हस्तिनम् ।
विदारयति कुम्भौ स काष्ठानीव कुठारकः ॥ ७ ॥

मुक्ताफलानि जगृहे मुष्टिभिर्भुवि चाक्षिपत् ।
हस्तिदन्तेषु पतितैः खड्गैर्भृशभयानकाः ॥ ८ ॥

समुत्थिताश्चाग्निकणास्ते दहन्ति स्म सैनिकान् ।
तावत्क्रुद्धो महाबाहुः कुशो बाणान् मुमोच सः ॥ ९ ॥

शिरांसि चिच्छिदे वीरौ बाहूनङ्गदभूषितान् ।
शिरांसि करिणां बाणैरनयद्दिवमोजसा ॥ १० ॥

आकाशेऽद्यापि ते प्राप्ता एकीभावं व्यवस्थिताः ।
अतः परं हि नक्षत्रं न भूतं न भविष्यति ॥ ११ ॥

तस्मान्नक्षत्रतां प्राप्ताः खे हस्ता हस्तिनां तथा ।
वर्षन्त्यद्यापि भूपृष्ठे हस्तादानोदकं बहु ॥ १२ ॥

सावित्रं तस्य गनीयं निदानं मौक्तिकस्य च ।
एवं हि करिशीर्षाणि छिन्नानि शतशो रणे ॥ १३ ॥

कुशेन तेन वीरेण तदद्भुतमिवाभवत् ।
अथ कोदण्डटङ्कारबधिरीकृतदिग्गजः ॥ १४ ॥

ददर्श भरतः किं तौ कार्तिकेयगणेश्वरौ ।
संहरन्तौ निजं सैन्यं वनं वायुविभावसू ॥ १५ ॥

मुमोच निशितान्बाणांस्तोयधारा इवाम्बुदः ।

जैमिनिरुवाच—

बालकौ कार्मुकयुतौ घनश्यामौ च संगतौ ॥ १६ ॥

काकपक्षधरौ वीक्ष्य हनूमानिदमब्रवीत् ।

हनूमानुवाच--

एतौ रामाकृती बालौ बलं रामस्य वीक्षकौ ॥ १७ ॥

सज्जास्तिष्ठन्तु सर्वत्र भरताद्या महाबलाः ।
एवं ब्रुवति वीरे तु तदा पवननन्दने ॥ १८ ॥

तावत्कुशः प्रत्युवाच लवं रणगतं तदा ।
पश्य सैन्यं लव प्राप्तं तुरङ्गं नेतुमिच्छति ॥ १९ ॥

व्रजाम्येतद्वलं भ्रातः ! तुरङ्गं त्वं हि पालय ।
ततो रामानुजं वीक्ष्य कुशो वचनमब्रवीत् ॥ २० ॥

कुश उवाच—

शत्रुघ्नो लक्ष्मणश्चोभौ शयाते निहतं बलम् ।
किन्नाम मे न जानासि शत्रुं मां कुशमागतम् ॥ २१ ॥

भरत उवाच--

त्वां नयिष्याम्यहं युद्धात्पराजित्य निजां पुरीम् ।
सानुजं त्वरितं बालं चोटं मुञ्च व्रजाधुना ॥ २२ ॥

जननीं ते तापसीं मे करुणा वीक्ष्य जायते ।
जनन्यै ब्रूहि मुक्तोऽस्मि सबन्धुर्भरतेन च ॥ २३ ॥

क्षमितं स्वबलस्याद्य पातनं यत्त्वया कृतम् ।
तच्छ्रुत्वा वचनं तस्य कुशो बाणैरथार्दयत् ॥ २४ ॥

भरतस्य धनुश्छिन्नं रथश्च शकलीकृतः ।
कुशकोदण्डनिर्मुक्तैर्मुमोह भरतः शरैः ॥ २५ ॥

गिरिमुत्पाट्य हनुमान्भरतं वीक्ष्य मूर्च्छितम् ।
चिक्षेप सीतासुतयोर्मूर्ध्नि योजनमायतम् ॥ २६ ॥

तं पर्वतं दीर्घनेत्रौ बाणैश्चक्रतुरम्बरे ।
त्रसरेणुनिभं स्वद्गात्रभूतिसुखप्रदम् ॥ २७ ॥

